# A TRIENNIAL CATALOGUE OF MANUSCRIPTS.

COLLECTED DURING THE TRIENNIUM

## 1913-14 TO 1915-16

FOR THE

## GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY, MADRAS


BY

S. KUPPUSWAMI SASTRI, M.A.,

CURATOR, GOVERNMENT ORIENTAL MANUSCRIPTS LIBRARY AND PROFESSOR OF SANSKRIT AND COMPARATIVE PHILOLOGY, PRESIDENCY COLLEGE, MADRAS.


*Prepared under the orders of the Government of Madras.*

**Volume II.—Part 1.—Sanskrit B.**


MADRAS:

PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.

1917.

# A TRIENNIAL CATALOGUE OF MANUSCRIPTS.

## 1913-14 TO 1915-16.

## VOLUME II.

---

### PART I—SANSKRIT—B.

---

### R. No. 1330.

Paper. 11 × 9½ inches. Foll. 240. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Rāmasvāmi Śāstri of Virincipuram in the North Arcot district.

Bound in two volumes. Foll. 21*b*, 23*b*, 25*b*, 27, 28, 32*a*, 41*b* to 44*b*, 71*a*, 73*a*, 172, 177*b* to 180*b*, 186, 187*a*, 189 to 191*a*, 196*a*, 197, 199*b*, 201, 202*a*, 212*b* to 220*b*, 228*b* to 225*a*, 227 to 230, 232 to 237, and 238*b* are left blank.

अजितागमः.

AJITĀGAMAḤ.

An Āgama work on Śaivism dealing with details of ceremonies and festivals connected with the worship of Śiva in temples.

Contains Paṭalas 1 to 62 and the names of these Paṭalas are given below :—

१. तन्त्रावतारः.
२. शिवस्वरूपविधिः.
३. लिङ्गोत्पत्तिविधिः.
४. लिङ्गलक्षणम्.
५. शिलासंग्रहणम्.
६. देशनिर्देशः.

**Beginning:**

श्रीमद्रिरितटे रम्ये मन्दरे चारुकन्दरे ।
देवदानवगन्धर्वदैत्यादिऽयाङ्गनाजनैः ॥

*　　*　　*

वस्वादित्यैश्च रुद्राद्यैः सर्वदेवैः समावृतम् ।
विनयेनाच्युतो गत्वा पृच्छति स्म जगद्गुरुम् ॥

अच्युत उवाच—

भगवन् देवदेवेश त्रिपुरान्तक शंकर ।
अजितं नाम यत्तन्त्रं शिवात्प्राप्तस्त्वया पुरा ॥
तन्ममाचक्ष्व देवेश तस्योत्पत्तिपुरःसरम् ।
एवमुक्तो महादेवः स्फुरल्लालाटलोचनः ॥
उवाच तन्त्रं हृष्टात्मा गिरिजापतिरव्ययः ।
यथाश्रुतं सुशिवादच्युताय महात्मने ॥

महेश्वर उवाच—

आसीत्पूर्वं हि सर्गादौ व्योमरूपात्पराच्छिवात् ।
शब्दस्ततोऽक्षरस्तस्माच्छब्दराशिरनुत्तमः ॥

*　　*　　*

**Colophon:**

इत्यजिताख्ये महातन्त्रे तन्त्रावतारः प्रथमः ॥

**End:**

द्वादशादावसानान्तं ध्वजावस्थानमेव वा ।
जीर्णादिदोषये (षे तं) त्यक्त्वा ध्वजमन्यं निवेशयेत् ॥

**Colophon:**

इत्यजिताख्ये महातन्त्रे विशेषोत्सवपटलः ॥

चैत्रमासविधेयः (या) स्याद्दमना(द् ध्वजस्या)रोहणक्रिया ।
पवित्रं प्रकृतिर्यस्यात्तदनन्तरमुच्यते ॥

*　　*　　*

वक्त्राणामग्निजिह्वानां ज्वालानां च निरूपिणाम् ।
मुष्टिं काम्यविधानेषु प्रसङ्गादभिधीयते ॥
कुण्डमानमुखं त्वाहुर्हृदाहुतिभिरीप्सितम् ।
पश्चिमे शिष्यसंस्कारनित्यहोमौ समाचरेत् ॥

## R. No. 1331.

Paper. 11¼ × 9¼ inches. Foll. 72. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. S. Gōpālācārya of Villiyambākkam in the Chingleput district.

तत्त्वचिन्तामणिव्याख्या—प्रकाशः.

TATTVACINTĀMAṆIVYĀKHYĀ : PRAKĀŚAḤ.

By Rucidatta. Same work as that described under No. 4013 of the D.C.S. MSS., Vol. VIII.

Contains the Śabdakhaṇḍa incomplete.

**Beginning:**

व्यालोलकर्णमणिकुण्डलकान्तिपूरकिर्मीरिताद्विगुणगण्डमरी(चि)भाजः ।
तत्पातु पञ्चशरसङ्गरसाहसस्य . . . . . . म्बिकायाः ॥
आलोच्य निखिलं शास्त्रं विचार्य च पुनःपुनः ।
शब्दतन्त्रप्रकाशोऽयं रुचिदत्तेन तन्यते ॥

उपमानस्य शक्तिग्राहकत्वेन शब्दोपजीव्यत्वात्तन्निरूपणानन्तरं शब्दो निरूप्यत इत्यत्राह—अथेति । यद्यप्यतिदेशवाक्यसामान्यस्य शब्दसामान्यस्य उपमानोपजीव्यत्वं तथापि न सर्वस्य तथात्वम् ।

**End:**

भेदस्य विरहमभेदमवगाहते । तदभाने द्वितीयस्य उभयत्रापि च स एवायं गकार इति व्यपदेशः । यत्र तु तद्वृत्तिजात्यवच्छिन्नजातिमत्त्वमन्यत्र भासते तत्त्वयमिति । केचित्तु.

---

## R. No. 1332.

Paper. 12 × 9¾ inches. Foll. 39. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. C. Paṭṭābhirāmamūrti of Vizianagaram.

शाण्डिल्यशतसूत्रभाष्यम्.

ŚĀṆḌILYAŚATASŪTRABHĀṢYAM.

By Svapnēśvarācārya. Similar to the work described under No. 5150 of the D.C.S. MSS., Vol. XI.

Complete in three Adhyāyas.

**Beginning:**

प्रपद्य परमं देवं श्रीस्वप्नेश्वरसूरिणा ।
शाण्डिल्यशतसूत्रीयं भाष्यमाभाष्यतेऽधुना ॥
गोविन्दचरणद्वन्द्वमधुनो महदद्भुतम् ।
यत्पायिनो न मुह्यन्ति मुह्यन्ति यदपायिनः ॥

जीवानां ब्रह्मभावापत्तिर्मुक्तिरिति वक्ष्यते । जीवाश्च ब्रह्मणोऽत्यन्तमभिन्ना इति तेषां संसारस्त्रिगुणात्मकान्तःकरणोपाधिकृतो न साहजिकः, स्फटिकस्येव जपादिसान्निधिकृतं लौहित्यादिकम्; स चौपाधिकत्वादेव न ज्ञानेन निवर्तनीयः, किं तु उपाध्युपधेययोरन्यतरहानेन तत्सम्बन्धहानेन वा। न हि निपुणतरदर्शनेनाप्युपाधियोगे स्फटिकलौहित्यभ्रमनिवृत्तिरस्ति । तथेह न सर्वसत्तास्फुरणात्मनो हानिः सम्भवति ।

* * * *

सर्वसत्ताप्रकाशकतयेति । सर्वमेतद्द्वितीये तृतीये स्फुटीभविष्यति । तस्मात्पुरुषार्थहेतुत्वाद्धर्मस्येव भक्तेः मिमांसावित्सयेदं सूत्रम्—अथातो भक्तिजिज्ञासा । अथेत्यधिकारार्थो नानन्तर्यार्थः ।

* * * *

**Colophon:**

इत्याचार्यस्वप्नेश्वरविद्वद्वरविरचिते शाण्डिल्यशतसूत्रीयभाष्ये प्रथमाध्यायस्य प्रथममाह्निकम् ॥

**End:**

प्रलये प्रलयाख्यविकारातिरिक्तस्य विकारस्याभाव एव । संस्कारास्तु सूक्ष्मात्मना तिष्ठन्तीति न कोऽपि दोषः ॥

पर्यवसिता त्रिलक्षणी भक्तिमीमांसा ॥

परिवीतपीतवसनं घनोपमं शतपत्रपत्रसदृशायतेक्षणम् ।
धृतवेणु रेणुपरमण्डितं गवां हृदि नोऽस्तु कौस्तुभविभूषणं महः॥
गौडक्ष्मावलये विशारद इति ख्यातादभूद्भूमणेः
सर्वोर्वीपतिसार्वभौमपदभाक् प्रज्ञावतामग्रणीः ।
तस्मादानजलेश्वरो बुधवरस्सेनाधिपः क्ष्माभृतां
स्वप्नेशेन कृतं तदङ्गजनुषा सद्भक्तिमीमांसनम् ॥

Colophon:

इति श्रीस्वप्नेश्वरविद्वद्वरविरचिते शाण्डिल्यशतसूत्रीये भाष्ये तृतीयस्याध्यायस्य द्वितीयमाह्निकम् ॥

समाप्तश्चाध्यायः ॥

समाप्तेयं भाक्तिमीमांसा ॥

विश्वनाथ अच्युतरामेण लिखितम् ॥

---

## R. No. 1333.

Paper. 11 × 8¾ inches. Foll. 218. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. S. Gōpālacārya of Villiyambākam

तत्त्वचिन्तामणिप्रकाशव्याख्या—तर्कचूडामणिः.

TATTVACINTĀMAṆIPRAKĀŚAVYĀKHYĀ: TARKA-CŪḌĀMAṆIḤ.

By Dharamrājādhvarin, native of Kaṇḍramāṇikkam.

Same work as that described under No. 4102 of the D.C.S. MSS., Vol. VIII.

Contains up to the Vidhivāda in the Śabdakhaṇḍa. It is stated in this manuscript that it has been copied from the manuscript of Dvivēdi Vēṅkaṭācāriyar.

**Beginning:**

अवसरसंगत्या एककार्यत्वसंगत्या वा आसक्तिनिरूपणमभिप्रेत्यासक्तिलक्षणमुक्तं मणौ--आसक्तिश्चेति । तदनुपपन्नम्, घटेन शुभ्रं जलमाहरेत्यादावव्याप्त्यापत्तेरित्यत आह—अव्यवधानमिति ।

**End:**

तज्जन्येति । याजनाद्यत्रोपायत्रयान्विते धनार्जने कृष्याद्युपायान्यस्यार्थान्निरासे धनान्तरार्जने तदन्वयनिरासात् तदर्थं तन्त्रं प्रवर्ततैवेत्यर्थः ॥

**Colophon:**

इति विधिवादः समाप्तः ॥

इति रुचिदत्तविवरणं धर्मराजाध्वरिविरचितम् ॥

---

R. No. **1334**.

Paper. 10¼ × 9⅜ inches. Foll. 104. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of Śrīnivāsavaradatātācāriyār of Villiyambākam.

## विक्रान्तकौरवम्.

## VIKRĀNTAKAURAVAM.

The plot of this drama is the marriage of Kauravēśvara or Sōmēśvara, son of Sōmaprabha, with Sulōcana, the daughter of the king of Kāśi. By Hastimalla, son of Bhaṭṭāragōvindasvāmin or Gōvindabhaṭṭasvāmin of Śrīvatsagōtra who had five other sons, viz, Kumāra, Satyavākya, Dēvaravallabha, Udayabhūṣaṇa (the elder brothers of the author) and Vardhamāṇa, the author's younger brother.

The author is said to have been honoured by the Pāṇḍya king in hundred eulogistic stanzas in the open assembly for his prowess in having fought with elephants. He was apparently a resident of Dīpaṅguḍi. His father Gōvindabhaṭṭa is traced to Samantabhadra as the remote disciple of the latter thus :

Samantabhadra (author of Tattvārthasūtravyākhyā)
|
Śivakōti and Śivāyana (disciples)
|
Vīrasēna (descendant)
|
Jinasēna (disciple and author of Ādipurāṇa)
|
Guṇabhadra (disciple)
|
Gōvindabhaṭṭa (remote disciple an i the author's father).

Complete in six Aṅkas, namely, (१) वाराणसीसंदर्शन, (२) गङ्गामज्जन, (३) स्वयंवरयात्रा, (४) कौरवपौरवीय, (५) कौरवपौरवीयसंकेत, (६) कौतुकबन्ध.

**Beginning:**

असिमषिमुखा वृत्तिर्येन क्षितौ प्रकटीकृता
भरतमहिपः सम्राडस्यात्मजो भुवनोत्तरः ।
सुरपमकुटीकोटीनीराजिताङ्घ्रिसरोरुहः
प्रथमजिनपः श्रेयो भूयो ददातु मुदा सदा ॥

(नान्द्यन्ते) सूत्रधारः—अलमलमतिप्रसङ्गेन । मारिष इतस्तावत् ।

(प्रविश्य) पारिपार्श्वकः—भाव, अयमस्मि । आज्ञापयत्वार्यः ।

सूत्रधारः—शृणु तावत् । नानादिगन्तवास्तव्यपण्डिताखण्डमण्डलमण्डितामिमां परिषदं प्रार्थितवानस्मि ।

मारिषः—किमिति ।

सूत्रधारः—चिराभ्यासपल्लविता मदीयनाट्यशास्त्रविद्या सादरावलोकनेन सफलीक्रियतामिति ।

* * * *

सूत्रधारः—(स्मरणमभिनीय) आः, स्मृतम् । अस्ति किल सरस्वतीस्वयंवरवल्लभेन भट्टारगोविन्दस्वामिसूनुना हस्तिमल्लनाम्ना महाकवितल्लजेन विरचितं विक्रान्तकौरवं नाम रूपकमिति ।

मारिषः—अपि तादृशो हस्तिमल्लः ? ।

सूत्रधारः—

सरस्वत्या देव्याः श्रुतियुगवतंसत्वमयते
सुधासध्रीचीना त्रिजगति यदीया सुभणितिः ।
कवीन्द्राणां चेतःकुवलयसमुल्लासनविधौ
शरज्ज्योत्स्नालीलां कलयति मनोहारिरचना ॥

*  *  *  *

(नेपथ्याभिमुखमवलोक्य) अहो सुलोचनास्वयंवरयात्रामहोत्सवसंदर्श-नाय चतुरङ्गबलेन सह वाराणसीं प्रस्थितेन कौरवेश्वरेण समानीतस्य तत्प्रिय-सुहृदो विशारदस्य भूमिकामादाय रङ्गतरङ्ग इत एवाभिवर्तते । तदावामप्यन-न्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ)

॥ प्रस्तावना ॥

*  *  *  *

श्रीवत्सगोत्रजनभूषणगोपभट्टप्रेमैकधामतनुजो भुवि हस्तियुद्धात् ।
नानाकलाम्बुनिधिपाण्ड्यमहेश्वरेण श्लोकैः शतैः सदसि सत्कृतवान् बभूव ॥

**Colophon:**

इति श्रीगोविन्दस्वामिनः सूनुना हस्तिमल्लेन विरचिते विक्रान्तकौरवीय-नाटके वाराणसीसंदर्शनं नाम प्रथमोऽङ्कः ॥

**End:**

राजा—

संबन्धमीदृशमवाप्य नवीकृतोऽसावस्मास्वनल्पशुभपङ्क्तिरनुग्रहो वः ।
प्राप्तो मनोरथपथाभ्यधिकः प्रमोदो भूयः प्रियं मम किमस्ति गवेषणीयम् ॥

तथाप्येतद्भवतु—

भूयाद्भूतेषु धर्मप्रकृतिरसुमतां निष्प्रकम्पानुकम्पा
धर्म्ये पात्रे विसृष्टयै व्ययनियतिवशादार्जयन्त्वर्थमार्याः ।

संतानस्थापनायै विदधतु गृहिणः कामखेदापनोदं
चेष्टन्तामात्मनीना निरुपधिशुचये मोक्षसौख्योदयाय ॥

महाराजः—एवमस्तु, वयं च संवित्प्रकाशकौटस्थ्यमयीं मायातिलङ्घि-
नीवापवर्गस्य पदवीं त्रयीमाराधयामहे ॥

(निष्क्रान्ताः सर्वे)

श्रीमूलसंघव्योमेन्दुर्भारते भावितीर्थकृत् ।
देशे समन्तभद्राख्ये मुनिर्जीयात्पदर्द्धिकः ॥

तत्त्वार्थसूत्रव्याख्यानं गन्धहस्तिप्रवर्तकः ।
स्वामी समन्तभद्रोऽभूद्देशागमनिर्देशकः ॥

अवटतटमटति झटिति स्फुटपटुवाचाटधूर्जटिरपि ।
जिह्वावादिनि समन्तभद्रे स्थितवति सति का कथान्येषाम् ॥

शिष्यौ तदीयौ शिवकोटिनामा शिवायनः शास्त्रविदां वरेण्यौ ।
कृत्स्नश्रुतश्रीगुणपादमूलेऽप्यधीतवन्तौ भवतः कृतार्थौ ॥

तदन्वयेऽभूद्विदुषां वरिष्ठः स्याद्वादनिष्ठः सकलागमज्ञः ।
श्रीवीरसेनो जनितार्ककश्रीः प्रध्वस्तरागादिसमस्तदोषः ॥

यस्य वाचां प्रसादेन ह्यमेयं भुवनत्रयम् ।
आसीदष्टाङ्गनैमित्तज्ञानरूपविदां वरम् ॥

तच्छिष्यप्रवरो जातो जिनसेनमुनीश्वरः ।
यद्वाङ्मयं पुरोरासीत्पुराणं प्रथमं भुवि ॥

तदीयप्रियशिष्योऽभूद्गुणभद्रमुनीश्वरः ।
शलाकाः पुरुषा यस्य सूक्तिभिर्भूषिताः सदा ॥

गुणभद्रगुरोस्तस्य माहात्म्यं केन वर्ण्यते ।
यस्य वाक्सुधया भूमावभिषिक्ता जिनेश्वराः ॥

तच्छिष्यानुक्रमे याते सङ्घेयो विश्रुतो भुवि ।
गोविन्दभट्ट इत्यासीत् विद्वान् मिथ्यात्ववर्जितः ॥
देवागमनसूत्रस्य श्रुत्या सद्दर्शनान्वितः ।
अनेकान्तमतं तत्त्वं बहु मेने विदां वरः ॥
नन्दनास्तस्य सञ्जाता वर्धिताखिलकोविदाः ।
दाक्षिणात्या जयन्त्यत्र स्वर्णयक्षिप्रसादतः ॥
श्रीकुमारकविःसत्यवाक्यो देवरवल्लभः ।
उद्यद्भूषणनामा च हस्तिमल्लाभिधानकः ॥
वर्धमानकविश्चेति षडभूवन् कवीश्वराः ॥
श्रीमद्दीपङ्गुडीशः कुशलवरचितस्थानपूज्यो वृषेशः
स्याद्वादन्यायचक्रेश्वरगजवशकृद्धस्तिमल्लाह्वयन ।
गद्यैः पद्यैः प्रबन्धैर्नवरसभरितैरादृतोऽयं जिनेशः
पायान्नः पादपीठस्थलविकटलसत्पाण्ड्यमौलिप्रभौघः ॥

**Colophon:**

इति श्रीगोविन्दभट्टस्वामिनः सूनुना श्रीकुमारसत्यवाक्यदेवरवल्लभोद्यभूषणानामार्यमिश्राणामनुजेन कवेर्वर्धमानस्याग्रजेन कविना हस्तिमल्लेन विरचिते (ते विक्रान्तकौरवीयनाटके) कौतुकबन्धो नाम षष्ठोऽङ्कः ॥

समाप्तश्चायं ग्रन्थः ॥

---

R. No. **1335.**

Paper. $11\frac{1}{8} \times 8\frac{1}{2}$ inches. Foll. 75. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. S. Gōpālācārya of Villiyambākkam.

**नयमयूखमालिका.**

NAYAMAYŪKHAMĀLIKĀ.

By Appayadīkṣita. Same work as that described under No. 4908 of the D.C.S. MSS., Vol. X.

From the twenty-fifth Sūtra of the third Pāda of the first Adhyāya to the tenth Sūtra of the second Pāda of the second Adhyāya

**Beginning:**

तदुपर्यपि बादरायणः संभवात् ॥ १-३-२९ ॥ मनुष्याधिकारप्रसङ्गात् देवादीनां ब्रह्मविद्यायामधिकारोऽस्ति नवेति विचार्यते । तत्र पूर्वपक्षः—नास्त्यधिकारः शरीररहितानाम्, तेषां ब्रह्मविद्यानुष्ठाने सामर्थ्याभावात् । नच तेषां शरीरवत्त्वे प्रमाणमस्ति ।

* * * *

**Colophon:**

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे प्रथमस्याध्यायस्य तृतीयः पादः ॥

**End:**

सर्वेऽपि ते धर्मा उपपद्यन्ते ब्रह्मणि । तद्वैकल्यं प्रधानादौ ॥

**Colophon:**

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य प्रथमः पादः ॥

रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ प्रथमाध्यायप्रतिपादिते ब्रह्मणो जगत्कारणत्वे प्रधानपरमाणुकारणवादिभिः सांख्यवैशेषिकादिभिः केवलतर्कमवष्टभ्यापादितानि दूषणानीति प्रथमपादे निराकृतानि ।

* * *

समवायिकारणं च त्रसरेणोर्नैव शक्यमनुमानं तु बहुबाधकसद्भावात्.

R. No. **1336**.

Paper. 11¼ × 8½ inches. Foll. 94. Lines, 21 in a page. Dēvanāgarī. Good.

Transcribed in the Central Library, Baroda, in 1914-15 from a MS. of M.R.Ry. Bāla Śāstri, son of Gōvinda Śāstri of Vaṭapattana (Baroda ?).

## वैखानसश्रौतसूत्रम्.

## VAIKHĀNASAŚRAUTASŪTRAM.

This work deals with the ceremonial rites to be performed in connection with Vedic sacrifices conducted in accordance with the Vaikhānasa school.

Breaks off in the 20th Praśna.

**Beginning :**

यस्य चिर (द्विरद) वक्राद्याः ( . . ) विष्वक्सेनं तमाश्रये ॥

अथाग्न्याधेयं व्याख्यास्यामो ब्राह्मणो वसन्ते राजन्यो ग्रीष्मे वैश्यः शरदि रथकारो वर्षासु सर्वे शिशिर इत्येके । रोहिणीकृत्तिकामृगशिरः-पुनर्वसूत्तरानूराधाश्रवणहस्तविशाखेष्वेकस्मिन् नक्षत्रेऽमावास्यायां पौर्णमास्यां वादधीत ।

*

**Colophon :**

प्रथमोऽध्यायः ॥

**End :**

यज्ञे पवमानः सुवर्जन इति अन्येन वोदुम्बरेण तत्स्थाने वसिष्ठस्यादुखा स्रवन्ति दैवतेषु यस्यानपवृत्तौ यूपमित्येकोनचत्वारिंशत् ॥

**Colophon:**

इत्येकोनविंशः प्रश्नः ॥

अथ प्रायश्चित्तम् । अथ सौम्याग्नी यदि दीक्षितोऽनृतं वदेत

* * * *

पृषदाज्येनैकामाहुतिं जुहुयाद्यत्र तु गृहे मुग्धा स्यातां विसृष्टेषोः.

## R. No. 1337.

Paper. 10¾ × 9½ inches. Foll. 29. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Sōmanātha Śāstri of Challapalle in the Kistna district.

तत्त्वचिन्तामणिव्याख्या—फक्किका.

TATTVACINTĀMAṆIVYĀKHYĀ: PHAKKIKĀ.

By Madhurānātha. Same work as that described under No. 4019 of the D.C S. MSS., Vol. VIII.

Contains the Ākāṅkṣāvāda, of which the beginning is wanting, and the Āsattivāda in the Śabdakhaṇḍa.

**Beginning :**

मित्यादौ घटमित्याद्यानुपूर्वीविशेषाकाङ्क्षानिश्चयरूपविशेषसामग्रीविरहात् । यथा घटंवृत्ति कर्मत्वामित्याद्यन्वयबोधाभावः तथा नीलो घट इत्यादिष्वपि तत्तदानुपूर्वीविशेषरूपाकाङ्क्षानिश्चयरूपसामग्रीविरहादेव नोद्देश्यविधेयभावापन्नतादृशान्वयबोधः इति चेत्तर्हि नीलो घटोऽस्ति नीलं घटमानयेत्यादौ तादात्म्यसंबन्धेन नीलादेर्घटादावन्वयः कथं स्यात् ।

* * * *

**Colophon :**

इति शब्दपरिच्छेदरहस्ये आकाङ्क्षाग्रन्थरहस्यम् ॥

**End :**

तथाच ओदनं पचतीत्यादौ सति तात्पर्यग्रहे यथाकथंचिदुपस्थिताकाशकलायादेव(र)प्यन्वयबोध एवेत्यर्थाध्याहारपक्ष एव सम्यगित्यवधेयम् ॥

**Colophon :**

आसत्तिग्रन्थवादरहस्यम् ॥

---

## R. No. 1338.

Paper. 10¾ × 9½ inches. Foll. 16. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Yajña Nārāyaṇa Śāstri of Challapalle in the Kistna district.

तर्कसंग्रहव्याख्या—वाक्यवृत्तिः.

TARKASAṄGRAHAVYĀKHYĀ : VĀKYAVṚTTIḤ.

This is a commentary on the Tarkasaṅgraha of Annambhaṭṭa, which work has been described under No. 4143 of the D C.S. MSS., Vol. VIII.

Complete.

**Beginning :**

शिवया सहितं नत्वा शिवमम्बां गुरूनपि ।
वाक्यवृत्तिं सङ्गृह्य कुरुते बालसिद्धये ॥

ग्रन्थस्य निर्विघ्नपरिसमाप्तये कृतं मङ्गलं शिष्यवृत्तये प्रयोजनाभिधेयौ च श्लोकेनाह—निधायेति । हृदि मनसि निधानं स्वविषयकज्ञानजनकत्व-संबन्धेन स्थापनम् । मनसा विश्वेशं ध्यात्वेति भावः । बालानां ग्रहणपूर्वक-धारणयोग्यानाम् ।

**End :**

न्यायनये षोडशपदार्थेषूक्तेष्वपि न सप्तत्वहानिरित्याह—सर्वेषामिति । सर्वेषां प्रमाणादीनामित्यर्थः । तथा च काणादन्याययोरविरोध इति भावः । तदेवाह—काणादेति ।

यदि यामादिरापन्न भवं(वेत्) किमबलाबलम् ।
गोपिताः कर्त्रपादानकर्माधिकरणक्रियाः ॥

**Colophon :**

इति वाक्यवृत्तिस्समाप्ता ॥

---

R. No. **1339.**

Paper. $10\frac{3}{4} \times 9\frac{1}{2}$ inches. Foll. 15. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a MS. of Śrīnivāsa Pāṭrācārya of Kumbakonam.

अग्निहोत्रसञ्जीविनी.

AGNIHŌTRASAÑJĪVINĪ.

Deals with the expiatory rites to be performed for mistakes arising in the maintenance of the Vedic sacrificial fire. By Rāmā-nujācārya, son of Gōpālācārya of Śrīśaila family.

Complete in four Paricchēdas.

The author mentions Bhāṣya (Kapardibhāṣya ?), Vṛtti (Kauśikarāma ?) and Prayōgavṛtti (Tālavṛntanivāsin's ?).

**Beginning :**

श्रीमानस्मद्गुरुर्जीयाद्गोपालाचार्यशेखरः ।
येनाहूताः क्रतुशते स्वपुरं नास्मरन् सुराः ॥

मदीयाः परमाचार्यास्तथा शेषरघूद्वहाः ।
जीयासुर्यद्यशोवार्धेः सारिण्यः सर्वसिन्धवः ॥

वेदान्तदेशिकगुरुश्चिरं विजयतेतराम् ।
यज्जिह्वारङ्गमासाद्य भारती लासिकायते ॥

श्रीरामानुजयतिराडङ्गीकुरुतां मयाञ्जलिं रचितम् ।
यं गत्सानलगरमं विमताल्लनापतङ्गलाय द्राक्(?) ॥

तिन्त्रिणीमूलरसिकं तेजः किमपि चिन्तये ।
यस्य पार्श्वकुलस्यन्दिमारन्द . . . सादरी ॥

सेनानाथं नमस्यामि सूत्रवत्याः सहायिनम् ।
यदाज्ञा ब्रह्मरुद्राद्यैः शिरस्सु स्रगिवोह्यते ॥

श्रीरस्तु मे समृद्धीनामुदयाय दयानिधिः ।
यल्लीला(या व)शः शौरिर्भक्तदोषान् न बुध्यते ॥

श्रीरङ्गेश्वरमाश्रितैकसुलभं श्रीवेङ्कटाद्रीश्वरं
कारुण्याम्बुनिधिं नृपं (च) वरदं वात्सल्यवारां निधिम् ।

सीतावल्लभमार्तरक्षणपरं श्रीशार्ङ्गपाणिं सुरै-
रीड्यं कोमलवल्लिनायकमहं सर्वान् गुरून्संश्रये ॥

आपस्तम्बमुनिं चिरन्तनसदाचारव्यवस्थापकं
नत्वान्याचार्यभाष्य . . . . . . . . . . ।
गोपालार्यसुतः शतक्रतुचतुर्वेदीह रामानुजः
प्रायश्चित्तविधिं करोति सुखबोधायाग्निहोत्रास्पदम् ॥

प्रथमं तावदग्निहोत्रप्रायश्चित्तमुच्यते । प्रणयनकालात्पूर्वं गार्हपत्योऽनुगच्छेच्चेत्तद्भस्मना नित्यारणी संस्पृश्य मथित्वा तदायतने निधाय आहवनीयं प्रणीय तत्र मित्रादिद्वादशाहुतीर्हुत्वा तमाहवनीयं त्यक्त्वा विहारकाले यथापूर्वं धृष्टचाधानाद्यग्निहोत्रं कुर्यात् । भस्मस्पर्शमथननिधानापहरणेषु चतुर्ष्वपि तूष्णीमिति ज्ञेयम् ।

* * * *

**Colophon :**

इति श्रीशैलान्वयसम्भवस्य विद्वच्चूडामणिचतुर्वेदिशतक्रतुगोपालाचार्यतनूभवस्य रामानुजाचार्यस्य कृतावग्निहोत्रसञ्जीविन्यां प्रथमः परिच्छेदः समाप्तः ॥

**End :**

न तावदस्मिन सङ्ग्रहे सर्वाणि प्रायश्चित्तानि साकल्येन प्रतिपादयितुं शक्यन्ते, विस्तरप्रसङ्गात् । अतोऽत्रानुक्तमस्पष्टं वा भाष्ये वृत्तौ प्रयोगवृत्तौ वा सम्यग्बोद्धव्यमिति ॥

**Colophon :**

इति श्रीशैलान्वयसम्भवस्य शतक्रतुचतुर्वेदिगोपालाचार्यतनयस्य रामानुजाचार्यस्य कृतावग्निहोत्रसञ्जीविन्यां चतुर्थः परिच्छेदः समाप्तः ॥

अग्निहोत्रसञ्जीविनी समाप्ता ॥

---

R. No. **1340.**

Paper. $10\frac{5}{8} \times 9\frac{3}{8}$ inches. Foll. 24. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a palm-leaf MS. of Taṅgal Rāmasvāmi Śāstri of Viriñcipuram.

## कविकण्ठपाशः—सव्याख्यः.

## KAVIKAṆṬHAPĀŚAḤ WITH COMMENTARY.

A short erotic poem in which a lover describes the physical charms of his beloved in various fanciful ways.

Incomplete.

**Beginning:**

लीलावासगृहं गिरिक्षतिकरं लक्ष्मीनिवासास्पदं
कोकाह्लादविघातकं परशिशुत्राणप्रवृत्त्यातुरम् ।
वक्षोजद्वितयं विभाति हरिणीलोलेक्षणे तावकं
कान्तावत्करिदन्तवत्कमलवत्काकुत्स्थवत्काकवत् ॥

*  *  *  *

कोकोल्लासि मदप्रसूतिसदनं तारागृहारोचितं
नानाभोगसमागमाद्यकरणं तालप्रमाणोज्ज्वलम् ।
वक्षोजद्वितयं विभाति हरिणीलोलेक्षणे तावकं
गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥

कोकोल्लासि कोकस्य चक्रवाकस्य उल्लासः सौन्दर्यं सोऽस्यास्तीति कोकोल्लासि । 'उत्साहकान्त्योरुल्लासः' इति टीकासर्वस्वे । गङ्गापक्षे कोकमुल्लासयत्यानन्दयतीति कोकोल्लासि[नि] गङ्गायाः चक्रवाकस्थानत्वेन तदुल्लासकत्वं सम्भवति ।

**End:**

वीणालाबुसदृग्दिवाकरकरैः सत्स्पर्शनैः पावनै-
रप्यस्पृष्टमलभ्य . . मनिशं गुर्वक्षरं निर्मलम् ।
वक्षोजद्वितयं विभाति हरिणीलोलेक्षणे तावकं
वाणीवद्वनराजिवद्वलयवद्वागीशवद्वारिवत् ॥

वीणालाबुसदृक् वीणाया वल्कल्याः (वल्लक्याः) अलाब्वोः तुम्बी-

फलयोः सदृक् समानम् । . . . . . . . . . . . त्यमरः । वाणीपक्षे . . . . . . . सङ्कल्पे स्यन्दनपथेन्द्राध्याने निवारणे इति रत्नमाला ।

* * * *

विष्वग्भारतमालयं•नवसुधारूपं सदागौरवं
नालीकेरिङ्गितगौरवं नखरभूश्रीकल्पितालेपनम् ।
वक्षोजद्वितयं विभाति हरिणीलोलेक्षणे तावकं
क्षोणीवत्क्षणदेशवत्क्षतजवत्क्षीणात्मवत्क्षान्तिवत् ॥

---

R. No. **1341.**

Paper. $10\frac{3}{4} \times 9\frac{1}{2}$ inches. Foll. 40. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry M. Rāmakṛṣṇakavi of Vanaparty.

**अद्वैतसिद्धान्तविद्योतनम्.**

ADVAITASIDDHĀNTAVIDYŌTANAM.

A treatise in support of the Advaita school of Vēdānta. It refutes the doctrines of the Nyāya school of philosophy in regard to illusory appearances. By Brahmānandasarasvatī, the author of the commentary on the Advaitasiddhi and of the Candrikā.

Contains the Anirvacanīyatāvādārtha; complete.

**Beginning:**

सदनन्तचिदानन्दे जगती यत्र जायते ।
रजतादीव शुक्त्यादौ तदेवाहं परा गतिः ॥

ननु इदं रजतमिति प्रतीत्यन्यथानुपपत्त्या विषयापेक्षायामपि न तदनुवृत्त्यपेक्षते देशान्तरीयस्यैव विषयव्यभिचारादित्याशङ्कते—नन्विति । भ्रमस्थल इति ।

**End:**

प्रारब्धभोगोपयुक्तप्रपञ्चस्य सत्त्वेऽप्यग्रे तदसत्तायां तत्त्वप्रमायास्तत्त्वाज्ञानतत्प्रयुक्तपूर्वानवस्थानानियतत्वादिति दिक् ॥

**Colophon:**

इत्यद्वैतसिद्धान्तविद्योतने परमहंसपरिव्राजकाचार्यश्रीब्रह्मानन्दसरस्वतीविरचितः अनिर्वचनीयवादार्थः समाप्तः ॥

श्रीब्रह्मानन्दसरस्वतीविरचितः अद्वैतवादार्थः समाप्तः ॥

---

R. No. **1342.**

Paper. $10\frac{5}{8} \times 9\frac{1}{8}$ inches. Foll. 11. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Cinnasvāmi Śāstri of Mylapore.

भस्मोद्धूलनवादावलिः.

BHASMŌDDHŪLANAVĀDĀVALIḤ.

A discussion showing that smearing the body with the holy ashes, which is said to be a preliminary ceremony in connection with the Pāśupatavidyā inculcated in the Atharvaśirōpaniṣad, is not restricted to that Vidyā alone, but is general in character and has to be observed in connection with all kinds of Brahmavidyā. The work is attributed to Appayadīkṣita.

Complete.

**Beginning:**

विष्णुभागवता मन्यन्ते—अग्निरित्यादिना भस्म गृहीत्वा विमृज्य अङ्गानि संस्पृशेत् व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय इत्यथर्वशिरसि पाशुपतविद्याप्रकरणे समाम्नातं भस्मोद्धूलनं प्रकरणवशात् तन्मात्राङ्गम्, न तु सकलब्रह्मविद्याङ्गम्। नहि पूर्वोऽतिथिभ्योऽश्नीयादिति वैश्वानरविद्याप्रकरणे समाम्नातमातिथिभोजनं सकलब्रह्मविद्याङ्गमिति सैद्धान्तिकी मर्यादा ।

तत्रेयं सैद्धान्तिकी प्रथमा कक्ष्या—अग्निरित्यादिमन्त्रविधेयं भस्मोद्धूलनं सकलब्रह्मविद्याङ्गम्, विद्याङ्गत्वे सति सकलब्रह्मविद्यापेक्षितोपकारजनकत्वात्।

**End:**

तस्य मुक्तिफलकत्वस्य विद्याद्वारा समर्थनीयत्वात् तस्यां विद्याविशेषानुक्रमणाभावात् विनिगमनाविरहेण सर्वासां ब्रह्मविद्यानां द्वारत्वेन निवेशनात् ॥

**Colophon:**

इत्युद्धूलनत्रिपुण्ड्रयोः सकलब्रह्मविद्याङ्गत्वसमर्थनो वादः ॥

---

R. No. **1343.**

Paper. 11 × 8⅞ inches. Foll. 82. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Sthalaśāyi Ayyaṅgār of Agaram, a village in the Chingleput district.

(*a*) भगवत्प्रतिष्ठाविधिः.

BHAGAVATPRATIṢṬHĀVIDHIḤ.

Foll. 1*a*—20*a*.

Similar to the work described under No. 5328 of the D.C.S. MSS., Vol. XI.

Complete ; as found in the Tāntrika portion of the Pāñcarātrāgama.

**Beginning:**

पाञ्चरात्रे तान्त्रिकप्रकारेण विष्णुप्रतिष्ठाप्रयोग उच्यते—

वन्दे विष्णुं जगद्योनिं पीतकौशेयवाससम्।
चतुर्भुजं विशालाक्षं श्रीदेव्या सह संयुतम्॥

अथादौ कर्ताचार्यादीनमुं विष्णुप्रतिष्ठामहोत्सवं यूयं कारयध्वमिति विज्ञाप्य तैः सह मङ्गलस्नानं कृत्वा यस्मिन् दिने प्रतिष्ठा कार्या तस्य पूर्वदिने सायन्त(न्दि)ने शास्त्रोक्तनिर्मितदेवालयादीनलंकृत्य यागमण्डपे

रङ्गवल्ल्यादि कृत्वा अष्टदलपद्मं विलिख्य शालिना विकीर्य पालिकादीन्यासाद्य वस्त्रमालिकालंकृतं खनित्रमादाय ग्रामस्योदीच्यां वल्मीकभूमिमासाद्य ।

**End:**

स्वर्णशलाकया मन्त्ररत्नोच्चारणं कुर्वन् नयनोन्मीलनं कृत्वा पुरुषसूक्तविधानेनाभिषिच्य वस्त्रादिभिरलंकृत्य ध्यायामीत्यादिषोडशोपचारान् कृत्वा मुद्रान्नं निवेद्य नीराजनं दत्वा आचार्यादीन् संपूज्य ब्राह्मणान् भोजयेत् । गृष्टिधेन्वादिकमाचार्याय दातव्यम् ॥

**Colophon:**

इति श्रीपाञ्चरात्रोक्तप्रकारेण भगवत्प्रतिष्ठाविधिः समाप्तः ॥

चलने चाग्निदाहे च चिरलुप्ते च पूजने ।
पुनः प्रतिष्ठा कर्तव्या शास्त्रोक्तेन विधानतः ॥

---

(*b*) भगवद्विवाहप्रयोगः.

BHAGAVADVIVĀHAPRAYŌGAḤ.

Foll. 20*b*—41*a*.

On details of procedure to be observed in connection with the festival celebrating the marriage of God Viṣṇu with Goddess Lakṣmī in Viṣṇu temples.

Complete; as found in the Bharadvājasaṃhitā of the Pāñcarātrāgama.

**Beginning:**

पाञ्चरात्रतान्त्रिकप्रकारेण भगवद्विवाहप्रयोग उच्यते—

शुक्लाम्बरधरं (. . . .) विघ्नोपशान्तये॥ अथैकादश्यां प्रातराचार्यादयो नित्यकर्मादिकं निर्वर्त्य देवालयं गत्वा ध्रुवादीनभिषिच्यालं-

कृत्य यागमण्डपे नवधान्यादीन्यासाद्य सायंतनसमये तत्र यागबिम्बं निनीय तदेव लग्नादिकं पठित्वा ग्रामदेवताभ्यः कुलदेवताभ्यो महा . . . नेभ्यो नम इत्युक्त्वा प्राणानायम्य अस्तु श्रीभूमिनीलासहित-श्रीमन्नारायणस्य तिरुकल्याणमहोत्सवं करिष्यमाणः

* * * *

भगवतो बलेनेत्यादि शुभमित्यन्तं भगवत्पुण्याहं वाचयेत् ।

**End:**

स्पृष्टास्पृष्टिनिवृत्त्यर्थं पुष्पयागमहोत्सवं करिष्ये इति संकल्प्य तत्र देवस्य द्वादशाराधनद्वादशनैवेद्यप्रबन्धपठनादिकं कुर्यात् ॥

**Colophon:**

इति श्रीपाञ्चरात्रे भरद्वाजसंहितोक्तप्रकारेण भगवद्विवाहानुक्रमाणिका समाप्ता ॥

प्रज्वाल्य पश्चिमे कुण्डे द्वादशाक्षरविद्यया ।
प्रस्थमर्धाधिकं चाज्यं वा (हुत्वा) पूर्वमुखे गुरुः ॥
द्वादशाक्षरमन्त्रेण पूर्णसुस्वरमुच्चरन् ।
नासिकापुटमुद्धृत्य जुहुयात्साधकोत्तमः ॥

---

(*c*) भारद्वाजसंहिता.

BHĀRADVĀJASAṀHITĀ.

Foll. 41*a*—55*a*.

Same work as that described under No. 5331 of the D.C.S. MSS., Vol. XI. The names of the one hundred and eight Tantras of the Pāñcarātrāgama are mentioned in the extract from the beginning given below.

Beaks off in the eleventh Adhyāya. The headings of the Adhyāyas contained in this MS. are given below.

Beginning:

मेरुपृष्ठे सुखासीनं भरद्वाजं द्विजोत्तमम् ।
वेदवेदान्ततत्त्वज्ञमात्मज्ञानपरायणम् ॥
विनयेनोपसंगम्य कण्वो नाम महानृषिः ।
प्रणम्य शिरसा भूमौ पप्रच्छेदं जगत्पतिम् ॥

कण्वः—

भरद्वाज महाप्राज्ञ श्रुतिपूर्वं मयानघ ।
न श्रुतं पाञ्चरात्राख्यं शास्त्रं विष्णुमुखोद्गतम् ॥
तच्छास्त्रं विस्तरेणैव वक्तुमर्हसि मेऽनघ ।

भरद्वाजः—

साधु पृष्टं महाप्राज्ञ कण्व वेदविदां वर ।
अष्टोत्तरप्रभेदेन पाञ्चरात्रं श्रुतं मया ॥
सनत्कुमारेण मया गदितं बदराश्रमे ।
तत्ते वक्ष्यामि संक्षेपाच्छृणुष्व द्विजसत्तम ॥

कण्वः—

कथंभेदानि तन्त्राणां नामधेयं कथं भवेत् ।
वक्तुमर्हसि विप्रर्षे यदि तुष्टोऽसि मे प्रभो ॥

भरद्वाजः—

आचार्या वहवो ज्ञेयास्तन्त्राणां च पृथक् पृथक् ।
तस्माद्भेदा बहु प्रोक्ता नामधेयाः(यं) प्रवक्ष्यते ॥
आद्यं सनत्कुमारं च चतुर्मूर्तिश्च शाश्वता ।
नारदेश्वरकापिलं वाराहं शौनकं तथा ।
पद्मपुष्करहैरण्यं पाराशर्यं नृकेसरी ।
काश्यपागस्त्यकपिलयाज्ञवल्क्यात्रिसंभवाः ॥
विष्णुसिद्धान्ततिलकजयासात्त्वतसंहिताः ।
पुष्कर(श्च)महालक्ष्मीकुशलानन्दपावनाः ॥
गार्ग्यं बोधायनं तन्त्रमानन्दाख्यं च शाश्वतम् ।
पञ्चप्रश्नं श्रियः प्रश्नं प्रह्लादं नलकूबरम् ॥
मौद्गलमौ(शौ)शनं तन्त्रं मार्कण्डेयमतः परम् ।
मायावैभवविन्यासं वासिष्ठं जैमिनं तथा ॥
नारायणं च ब्रह्मोक्तं वैखानसमतः परम् ।
वीरमाङ्गलिकं चैव तथाच परमेश्वरम् ॥
जयोत्तरंव(च)शालल्यं मारीचं च तथोत्तरम् ।
पञ्चतत्त्वं महाज्ञानं वैजयन्तं च पैप्पलम् ॥
विष्वक्सेनं तथा तार्क्ष्यं वाल्मीकं भूमिसंहिता ।
सनत्कन्दं सनन्दं च विश्वामित्रं तथाङ्गिरम् ॥
ऐन्द्रं दूर्वासतन्त्रं च कौबेरं वारुणं तथा ।
पावकं पावनं चैव याम्यं च वसुसंहिता ॥
मुद्गलं रोमशं चैव मैत्रेयं मत्स्यमेव च ।
ब्रह्माण्डं वापि कौमारं पद्मं कूर्मं तथैव च ॥

वामनं पुरुषं लैङ्गं शातातपमतः परम् ।
दत्तात्रेयं तथा ज्ञेयं भारद्वाजं च गौतमम् ॥
मुकुन्दं जामदग्न्यं च वामदेवं सुबोधिकम् ।
मेरुगङ्गा च सत्योक्तं गान्धर्वं गणसंहिता ॥
नारदोत्तरविज्ञानं गजेन्द्रमनुसंहिता ।
पुलस्त्यं पुलहं तन्त्रं मायातन्त्रमतः परम् ॥
विहगेन्द्रं महातन्त्रं पुरुषोत्तममेव च ।
एतानि नामधेयानि अष्टोत्तरशतानि च ॥
एवं सनत्कुमारेण कीर्तितं विप्रसत्तम ।

Colophon:

इति श्रीपाञ्चरात्रे भरद्वाजसंहितायां प्रथमोऽध्यायः ॥

End:

एवमुक्त्वा जगामाशु भरद्वाजो महामुनिः ।
आश्रमं स्वं श्रिया जुष्टमाश्रितश्रमनाशनम् ॥

Colophon:

इति श्रीपाञ्चरात्रे भरद्वाजसंहितायां शतसहस्रतुलसीकल्पं नाम दश-मोऽध्यायः ॥

ध्रुवं तु ग्रामरक्षार्थमर्चनार्थं तु कौतुकम् ।
स्नानार्थं स्नपनं प्रोक्तमुत्सवं चोत्सवार्थकम् ॥

* * * *

रथस्य गोपुरादीनां वाहनानां द्विजोत्तम ।
भङ्गे वा पतने वापि शान्तिहोमं समाचरेत् ॥

---

(*d*) देवताप्रतिष्ठाविधिः.

DĒVATĀPRATIṢṬHĀVIDHIḤ.

Foll 55*a*—56*b*.

Similar to the work described under No. 3704 of the D.C.S. MSS., Vol. VII.

Complete.

**Beginning :**

अधुना सर्वदेवानां प्रतिष्ठाविधिवक्ष्य(रुच्य)ते ।
सा चोदनगये(गयने) शुद्धा इति शास्त्रे प्रतीयते ॥
कुर्यान्नान्दीमुखश्राद्धं स्वस्तिवाचनपूर्वकम् ।
अङ्कुरारोपणं कुर्यात् त्वमेव इति कृण्वताम् ॥

**End :**

युक्तेन विधिनानेन कारयेत् स्नापनं यथा ।
अस्य यज्ञफलप्राप्तिः सुखं चास्य सदा भवेत् ॥

**Colophon :**

इति बोधायनोक्तदेवताप्रतिष्ठा समाप्ता ॥

(e) प्राणप्रतिष्ठामन्त्रः.

PRĀṆAPRATIṢṬHĀMANTRAḤ.

Foll. 57*a*—58*a*.

Same work as that described under No. 6682 of the D.C.S. MSS., Vol. XIII, but with the addition of following stanzas.

Complete.

**End :**

एवमात्मनि कृ . . . वा पश्चाच्चामुष्य एव च ।
प्रतिष्ठादिषु देवानां मन्त्रादिषु तथैव च ॥
स्पृष्ट्वा च मनुमन्त्रेण अष्टोत्तरसहस्रकम् ।
अष्टोत्तरशतं वापि अष्टाविंशतिमेव वा ॥
प्राणप्रतिष्ठां कृत्वैव पञ्चकर्मणि कारयेत् ॥

**Colophon :**

इति प्राणप्रतिष्ठाविधिः संपूर्णः ॥

(*f*.) संप्रोक्षणविधिः.
SAMPRŌKṢAṆAVIDHIḤ.

Foll. 58*a*—59*a*.

Similar to the work described under No. 5400 of the D.C.S. MSS., Vol. XI.

Complete.

**Beginning:**

संप्रोक्षणविधिं वक्ष्ये विष्णुसांनिध्यकारणम् ।
शूद्रस्पृष्टे शुना स्पृष्टे प्रसवे मरणेऽपि वा ॥
रजस्वलाप्रवेशे वा सिक्ते वर्षजलैरपि ।

* * * *

पुनः संप्रोक्षयेद्बिम्बं न प्रतिष्ठां समाचरेत् ।

**End:**

गोभूतिलहिरण्याद्यैराचार्यं पूजयेद्बहु ।
कलशान् स्थापयत्पश्चाद्ब्राह्मणान् भोजयेत्ततः ॥

**Colophon:**

इति श्रीपराशरोक्तः संप्रोक्षणाविधिः संपूर्णः ॥

---

(*g*) नित्यार्चनविधिः.
NITYĀRCANAVIDHIḤ.

Foll. 59*a*—66*b*.

Similar to the work described under No. 5325 of the D.C.S. MSS., Vol. XI.

Complete.

**Beginning:**

प्राणानायम्य विध्युक्तप्रकारेण स्वस्तिपुण्याहवाचनं कृत्वा ब्राह्मे मुहूर्ते उत्थाय अर्चकः स्नानादिकं कृत्वा देवागारं प्रणम्य कवाटोद्घाटनं कृत्वा स्वर्णकलशेन शुद्धोदकं नयित्वा देवस्य पुरत उपविश्य प्राणानायम्य संकल्प्य ।

**End:**

ततः श्रीमदष्टाक्षरन्यासं कृत्वा ततः नित्यप्रकारवत् पर्यङ्कासनार्थं (न्तं) तिरुवाराधनं कुर्यात् ॥

(*h*) विष्णुभक्तप्रतिष्ठाविधिः.
VIṢṆUBHAKTAPRATIṢṬHĀVIDHIḤ.

Foll. 67*a*—72*b*.

Similar to the work described under No. 5322 of the D.C.S. MSS., Vol. XI.

Complete; as found in the Pāñcarātrāgama.

**Beginning:**

सरोभूतमहायोगिभक्तिसारपराङ्कुशकुलशेखरभट्टनाथभक्ताङ्घ्रिरेणुयोगि-वाहनपरकालमधुरकविगोदारामानुजाचार्याणां प्रतिष्ठाविधिं वक्ष्ये—

भगवन्मन्दिरात्पुरतः योगमण्डपं तन्मध्ये शयनवेदिकां तत्प्राच्यामग्निकुण्डं च कुर्यात् । तत्सदनं वितानरङ्गवल्लीतोरणादिभिरलंकृत्य आचार्यो यजमानेन सार्धं नद्यादिकं गत्वा स्वसूत्रोक्तविधिना स्नात्वा

* * * *

भक्तजनप्रतिष्ठाकर्मणि आचार्यं त्वां वृणे इति आचार्यादिवरणं कुर्यात् ।

**End:**

एवं प्रत्यहं श्रीभूमिनीलासमेतस्य भगवतः तद्भक्तानामाराधनं कुर्यात् ॥

**Colophon:**

इति श्रीपाञ्चरात्रागमप्रकारसंग्रह (हे) भक्तप्रतिष्ठाविधिः समाप्तः ॥

Foll. 72*b*—74*a* contain a portion of भूतशुद्धिमन्त्र, which is described under No. 6838 of the D.C.S. MSS., Vol. XIII.

---

(*i*) भगवत्प्रतिष्ठाविधिः.
BHAGAVATPRATIṢṬHĀVIDHIḤ.

Foll. 74*a*—82*a*. Fol. 82*b* is left blank.

Similar to the work described under No. 5328 of the D.C.S. MSS., Vol. XI. As taught by Vasiṣṭha.

Complete.

**Beginning:**

ऋषय ऊचुः—

भगवन् श्रोतुमिच्छामो हरिसंस्थापनक्रियाम् ।
कस्मिन् काले च कर्तव्यं विधिना केन सत्तम ॥

वसिष्ठः—

हरिसंस्थापनविधिं वक्ष्यामि मुनिसत्तमाः ।
यत्कर्तव्यं द्विजैस्तत्र तच्छृणुध्वमशेषतः ॥
सालग्रामशिलायां तु कर्तव्यं विग्रहं हरेः ।
पुण्यतीर्थे शुभे क्षेत्रे पुण्यपर्वतमस्तके ॥

* * * *

एकादश्यां शुक्लपक्षे द्वादश्यां श्रवणेऽपि वा ।
रोहिण्यां मन्दवारे तु तथैवादितिभे शुभे ॥

**End:**

विश्वभुजे नमः । सर्वभुजे नमः । आत्मने नमः । इति होमान्ते बलिं दद्यात् ॥

---

R. No. **1344.**

Paper. $11\frac{1}{4} \times 8\frac{7}{8}$ inches. Foll. 71. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Tiru Śrīnivāsavarada Tātācāriya of Villiyambākkam.

तन्त्रविलासः.

TANTRAVILĀSAḤ.

By Lakṣmaṇārya. Same work as that described under No. 4416 of the D.C.S. MSS., Vol. IX.

Complete.

**End:**

अथ ताभ्यो न दद्यादित्यर्थो विवक्ष्येत ततः शास्त्रप्राप्तनिषेधे विकल्पापत्तिरित्यलमतिविस्तरणे । विशिष्टभावनान्तरविधिपक्षस्तु दध्नेन्द्रियकामाधिकरणेऽस्माभिर्निरस्त इति नेह प्रपञ्च्यते इति दिक् ॥

अभ्युदयेष्ट्यधिकरणे सिद्धान्तः स्थापितः पुरा न्यायैः ।
भूयः स एव बहुलो विशकलितो लक्ष्मणार्यधीरेण ॥

**Colophon:**

तन्त्रविलासः समाप्तः ॥

अधिकरणषट्कभङ्गः ॥

कौशिकान्वयसम्भूतकृष्णेनाशु शुभात्मना ।
भङ्गोऽधिकरणषट्कस्यालेखि वादार्थमात्मनः ॥

---

R. No. **1345.**

**Paper.** 12 × 9¾ inches. Foll. 75. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. S. Gōpālācārya of Villiyambākkam.

बाधबुद्धिप्रतिबन्धकतारहस्यम्.
BĀDHABUDDHIPRATIBANDHAKATĀRAHASYAM.

Foll. 1*a*—67*a*. Foll. 67*b* and 68 are left blank.

A minor treatise in Sanskrit logic dealing specially with the manner in which a knowledge of Bādha (negation of Sādhya in Pakṣa) prevents a proper syllogistic inference. By Gadādharabhaṭṭa.

Complete.

**Beginning:**

सधर्मितावच्छेदककविशिष्टबुद्धौ समानधर्मितावच्छेदककग्राह्याभावनिश्चयो विरोधीति तदभावोऽपि हेतुः । तादृशबुद्ध्योश्च तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताशालिलौकिकान्यदोषविशेषाजन्यबुद्धित्वतद्धर्मावच्छिन्नविशेष्यतानिरूपितविशेषणताविशेषसम्बन्धावच्छिन्नतत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावप्रकारकनिर्णयत्वाभ्यां प्रतिबध्यप्रतिबन्धकभावः ॥

**End:**

घटवान्वह्निमानित्याकारकशाब्दबोधानुरोधेन विशेष्यतावच्छेदककोटिप्रविष्टघटत्वादिनिष्ठप्रत्यासत्त्या क्लृप्तहेतुकतथाविधयोग्यताज्ञानादिना फलजनने उक्तव्यापकतासम्बन्धेन क्लृप्तहेतुताकवह्नित्वादिभेदस्य सहकारितयैवोपपत्तिरिति दिक् ॥

**Colophon:**

इति श्रीमन्महामहोपाध्यायगदाधरभट्टाचार्यचक्रवर्त्तिविरचिते बाधबुद्धिप्रतिबन्धकतारहस्यं सम्पूर्णम् ॥

Foll. 69*a*—75*a* contain a portion of Siddhāntalakṣaṇa.

## R. No. 1346.

Paper. 11 × 8⅝ inches. Foll. 47. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a paper MS. of M.R.Ry. M. Rāmakr̥ṣṇakavi of Vanaparti.

### वेदान्तसिद्धान्तमुक्तावली.

### VĒDĀNTASIDDHĀNTAMUKTĀVALĪ.

By Prakāśānanda, pupil of Jñānānanda and Guru of Nānādīkṣita. Same work as that noticed under No. 2331 on page 746 of the India Office Library Catalogue.

Complete.

**Beginning:**

अदृष्टाद्वयमानन्दमात्मानं ज्योतिरव्ययम् ।
विनिश्चित्य श्रुतेः साक्षाद्युक्तिस्तत्राभिधीयते ॥

तत्रादौ मङ्गलं कृ(त)त्वानुस्मरणरूपं सूचयन् अभिधेयप्रयोजने साक्षात्प्रतिपाद्य कर्तव्यं प्रतिजानीते—अदृष्टेत्यादिना । आत्मानमुक्तविशेषणचतुष्टयविशिष्टं श्रुतितोऽपरोक्षीकृत्य तत्रोक्तविशेषणचतुष्टयविशिष्टे आत्मनि युक्तिश्रुत्यनुग्राहकस्तर्कोऽभिधीयत इत्यन्वयः ।

**End:**

तथा कुलपवित्रहेतुत्वमपि ब्रह्मविदा पठ्यते—

कुलं पवित्रं जननी कृतार्था सर्वेद्वा(र्वा ध)रा पण्यवती च तेन ।
अपारसंवित्सुखसागरेऽस्मिन् नीलं(लीनं) परे ब्रह्मणि यस्य चेतः ॥

तस्माद्यथोक्तब्रह्मात्मैकत्वविज्ञानेन कृतकृत्यो भवतीति नात्र विवदितव्यम् ।

इति गुणिना मुनिना यतता स्वबुद्ध्यातिशुद्धये (विमला) ।
रचिता प्रकाशयतिना सिद्धान्तमुक्तावली मौक्तिकश्रेणिः ।

अद्वैतानन्दसन्दोहसत्यज्ञानादिलक्षणा ।
नारायणसमासक्ता य(म)या सापत्न्यदूषिता ॥
शृणु प्रकाशवरि(गदि)त[।]मद्वैतं तिमिरापहम् ।
वादीभकुम्भनिर्भेदसिंहदंष्ट्राधरी(वदी)क्षताम् ॥
वेदान्तसारसर्वस्वमज्ञेयमधुनातनैः ।
अशेषेण मयोक्तं तत्पुरुषोत्तमयत्नतः ॥
स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्तावनी
यज्ञानां च कृतं सहस्रमखिला देवाश्च सम्पूजिताः ।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीज्ञानानन्दपूज्यपादशिष्यश्रीप्रकाशानन्दविरचिता सिद्धान्तमुक्तावली समाप्ता ॥

इदं स्वर्णपुरीमठीयं पुस्तकम् ॥

---

## R. No. 1347.

**Paper.** $11\frac{1}{8} \times 8\frac{7}{8}$ inches. Foll. 39. Lines, 17 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Śivarāma Śāstri of Trichinopoly.

### प्रयोगदीपिका.

### PRAYŌGADĪPIKĀ.

On details of ritualistic procedure to be observed in relation to a person after his death according to Āpastamba.

Breaks off in the fourth Khaṇḍa.

**Beginning:**

(पुनर्नः पा)हि विश्वतः स्वाहा—अग्नये अभ्य(ावर्तिन इदम्) ।

विश्वप्स्निया विश्वतस्परि स्वाहा—अग्नये अभ्यावर्तिन इदम् । तूष्णीं पुनः परिषिच्य प्रेतौ च . . . . . . . . . मेव जुहुयात् । तथैव सूत्रम्—अथ यदि सायं हुतेऽग्निहोत्रे पृथक् प्रकृष्य प्रातरग्निहोत्रं जुहुयात् इति ।

* * * *

प्रजापतिः प्रीयतामिति पुण्याहं वाचयित्वा शान्तिहोमाग्नौ दीपमादीप्य गृहानानयन्तीति लोकाचारः ॥

**Colophon:**

इति प्रयोगदीपिकायां दशाहविधौ तृतीयः खण्डः समाप्तः ॥

अथ चतुर्थः खण्डः ।

एकोद्दिष्टप्रयोगः—

एकोद्दिष्टे नाग्नौ करणं नाभिश्रवणं न दैवं न स्वधा ।

**End:**

उत्तिष्ठ पितरः अनुगच्छन्तु विश्वैर्देवैः सह तूष्णीमेक्षणं जयादिहोमशेषं समापयेत् । ओं शान्तिश्शान्तिश्शान्तिः ॥

आपस्तम्बकारिका—

प्रणीतिरर्घ्यशुद्धिश्च विधिर्घृतसमित्पदोः ।
क्षालनं वरणं चेध्ममुखमावाहनं तथा ॥
अर्घ्यदानमलङ्कारः पितृहोमो यमाहुतिः ।
तत स्विष्टकृतं कृत्वा उपस्थानाच्च पूर्ववत् ॥

---

## R. No. 1348.

Paper. $11\frac{1}{8} \times 8\frac{1}{4}$ inches. Foll. 44. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914-15 from a palm-leaf MS. of M.R.Ry. Mārkaṇḍēya Śarma of Guntur.

नलहरिश्चन्द्रीयम्—सव्याख्यानम्.

NALAHARIŚCANDRĪYAM WITH COMMENTARY.

A work dealing with the leading incidents in the life of Nala and Hariścandra. If the stanzas of this work are read in their natural order they describe the life of Nala, while if read in the reverse order they give a description of the life of Hariścandra. The author, as usual in such classes of works, takes care to add a commentary of his own.

Complete.

**Beginning**:

श्रीमानेष हरिश्चन्द्रः प्रतापे यशसां भरे ।
सदा नलो विधुर्जीयादवनेरवनेऽपि च ॥

व्या—श्रीमान् भाग्यवान् प्रतापे पराक्रमे हरिः सूर्यः यशसां भरे चन्द्रः । अवनेः भूम्याः अवने रक्षणे विधुरपि च विष्णुश्च एष नलः नलाख्यो महाराजः सदा जीयात् सर्वोत्कर्षेण वर्तताम् । हरिश्चन्द्रपक्षे तु श्रीमान् प्रतापेऽनलः अग्निः । यशसां भरे अवनेरवने च विधुश्चन्द्र इन्द्रश्च विष्णुश्च ।

* * * *

निजमोऽतिप्रजारागी नलोऽच्छस्सदमोऽजनि ।
यः श्रियश्चन्द्र इन्द्रश्च गोप्ता गोस्सर्वपूरिह ॥

आनुलोम्ये नलो राजा बभूवेत्यर्थं प्रातिलोम्ये हरिश्चन्द्रो बभूवेत्यर्थं च प्रतिपादयन्तं श्लोकमाह । निजा नित्या मा लक्ष्मीर्यस्य निजमः । स्वके नित्ये निजं त्रिषु—इत्यमरः । अतिप्रजारागी अत्यन्तं प्रजासु रागी । अच्छः निर्मलः सदमः इन्द्रियनिग्रहवान् दम इन्द्रियनिग्रह इत्यर्थः । नलः नलाख्यो महाराजः अजनि बभूव ।

* * * *

प्रातिलोम्ये तु

हरिपूर्वस्स गोप्ता गोश्चन्द्र इन्द्रश्चयश्श्रियः ।
निजमोदस्सच्छलोनगी राजाप्रतिमोऽजनि ॥

गोः भूमेः स्वर्गस्य च गोप्ता रक्षकः श्रियः साम्राज्यस्य चयः प्राकारभूतः वासस्थान(म्) इत्यर्थः; 'स्याच्चयो वप्रमस्त्रियाम्, इत्यमरः। अत एव इन्द्रः इन्द्रसमानः, अग्निर्माणवक इतिवत्। निजमोदः नित्यानन्दवान्। सच्छलोनगीः सत् सत्यरूपं छलेन वञ्चनया ऊना रिक्ता गीर्वाणी यस्य सः सच्छलोनगीः। अप्रतिमः निस्तुलः। हरिपूर्वः चन्द्रः हरिश्चन्द्राख्य इत्यर्थः सः प्रसिद्धः राजा अजनि बभूव।

**End :**

अथ प्रतिपादमानुलोम्यप्रातिलोम्ययोरेकरूपत्वमापन्न(म्) एकस्मिन् श्लोके श्लेषमहिम्ना उभावपि राजानौ सुखं प्राप्तवन्तौ इत्यर्थं प्रतिपादयन्तमाह—

लीलाकलो मध्यमलोकलाली त्यागी सुखी मुग्धमुखी सुगीत्या।
सभाप्रयानङ्गनयाप्रभास सहासया तत्र तया सहास॥

---

## R. No. 1349.

Paper. $11\frac{1}{4} \times 9\frac{3}{8}$ inches. Foll. 57. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Śrīnivāsapātrācārya of Kumbakonam.

### यतिधर्मः.

### YATIDHARMAḤ.

This treatise, after authoritatively pointing out at what stage of life a twice-born may become a Sannyāsin, lays down his duties and conduct after embracing that order.

Incomplete.

**Beginning :**

वादिद्विपशिरोभङ्गपञ्चाननपराक्रमः।
श्रीमान् वेङ्कटनाथार्यो वेदान्तगुरुरेधताम्॥

अत्र यतिधर्मसमुच्चयात् सुखग्रहणार्थं मुख्यप्रयोगोऽत्र लिख्यते । अधिकारिदशानिरूपणम्—वनवासादूर्ध्वमेव पारिव्रज्यं न ब्रह्मचर्यादित्येके । तथा च मनुः—

ऋणानि त्रीन(ण्य)पाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥ इति ।

**End :**

मध्ये भिक्षां करोत्येष प्राजापत्यद्वयं चरेत् ।

इति बोधायनः ।

ऐश्वर्यवद्गृहस्थस्य दासीदासयु(ते) गृहे ।
भार्या रजस्वला त(वा)स्या(द)न्तर्वत्नी भवेद्यदि ॥
एका स्त्री पचते चान्नमिति ज्ञात्वा भुजेद्यतिः ।
न तस्य निष्कृतिः सास्ति पातकी यतिवृत्तिहा ॥
चतुर्दिनानि मासान्तं संत्यक्त्वा भैक्षमाचरेत् ।

इति मनुः ।

इत्येकदाराविभक्तविषयम् ॥

---

R. No. **1350.**

Paper. 11½ × 9½ inches. Foll. 22. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Śrīnivāsapāṭrācārya of Kumbakonam.

**सन्न्यासविधिः.**

SANNYĀSAVIDHIḤ.

Lays down the general duties and conduct of a Sannyāsin and also the ceremonial rites to be performed after his death.

Complete.

**Beginning:**

(मो)क्षाश्रमं करिष्यन् पूर्वपापनिवृत्तिद्वारा सयोग्यतासिद्ध्यर्थं कृच्छ्र-चतुष्टयं स्वरूपेण कर्तुमशक्तः तत्प्रत्याम्नायं गोमूल्यतुरीयांशदानप्रकारेण द्रव्यदानं यत्किञ्चिद्धिरण्यरूपेण करिष्ये—इति सङ्कल्प्य एकसूकरपरि-मितं द्रव्यं नानागोत्रेभ्यो ब्राह्मणेभ्यस्तेभ्यस्तेभ्यः संप्रददे न मम इति ादत्वा अशेषे हे परिषादित्यादि मम मोक्षाश्रमस्वीकारे योग्यतासिद्धिमनु-गृहाणेति दक्षिणादानपुरस्सरं ब्राह्मणाननुज्ञाप्य ।

**End:**

समुद्रे त्वा नृमणा अप्स्वन्तिना(न्तर्ना)के सुपर्णमिति लवणेन प्रच्छाद्य प्रपूरयेत् । यथा श्वशृगालादिभिर्न बाध्येत तथा पुनः पुनः पूरयेत् । भूमिर्भूमिरगात् माता मातरमप्यगात् भूयास्मे पुत्रः पशुर्यो नो द्वेष्टि समभिद्यतां शम् । सर्वेषां स्नानतः शुद्धिः नाशौचं नोदकक्रिया । वहनं कुर्वतां पदे पदे अश्वमेधफलं भवेदित्याह भगवान् बोधायनः ।

इति यतेः खननसंस्कारविधिः ॥

---

## R. No. **1351.**

Paper. $10\frac{3}{4} \times 9\frac{1}{2}$ inches. Foll. 22. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914-15 from a palm-leaf MS. of M.R.Ry. Pañcāpagēśa Śāstri of Paḻamānēri (Tanjore district).

### अङ्गत्वनिरुक्तिः.

### AṄGATVANIRUKTIḤ.

A tract on what constitutes the exact definition of Aṅgatva, the relation of subsidiary and principal: by Murārimiśra.

Incomplete.

**Beginning:**

नमामि कुलजां स्वीयां कुलजाद्यधिदेवताम् ।
सर्वाभीष्टफलप्राप्त्यै ब्रह्मादिभिरभिष्टुताम् ॥

मुरारिसंसेवनलब्धबुद्धिः कुमारिलप्रोक्तमतानुयायी ।
मुरारिरङ्गत्वनिरुक्तिमेतां तनोति सद्युक्तिगुणैरुपेताम् ॥

तत्राङ्गत्वं न तावत् जातिः, तत्साधकाभावात् क्रियात्वादिना साङ्कर्याच्च, जात्यादिसाधारणाङ्गत्वस्य जातित्वायोगाच्च ।

**End:**

न हि व्रीहीनवहन्तीत्यादिवाक्यनिरपेक्षप्रवृत्तिकेन व्रीहिभिर्यजेतेत्यादिवाक्येन व्रीहीणामिव प्रकृतवाक्यनिरपेक्षेण केनचिद्वाक्येन पयसोऽपूर्वसाधनत्वमवगतम्. . . . . . . . . . . . . . .
एवंविधाङ्गत्वे च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट् प्रमाणानि ।

---

R. No. **1352.**

Paper. $10\frac{7}{8} \times 8\frac{3}{4}$ inches. Foll. 80. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Manasālakaṭṭai Gōvindācārya of Tirupati.

**उत्तररामचरितव्याख्या.**

UTTARARĀMACARITAVYĀKHYĀ.

Foll. 1*a*—72*b*.

A commentary on the Uttararāmacarita, a well-known drama of Bhavabhūti: by Ghanaśyāmapaṇḍita of Mauna Bhārgava family. He was the son of Kāśī Mahādēva and the domestic minister of Tukkāji Rāja. His paternal grandfather was Cauṇḍo Bālāji and his maternal grandfather was Timmāji Bālāji of Kauṇḍinya-gōtra and his elder brothers were called Śakambharī-Paramahaṁsa and Cidambara-Brahma. He had two wives, viz., Sundarī and Kamalā. This commentary . . has been printed in Bombay in the year 1915 with the help of this manuscript.

Complete.

**Beginning:**

चतुर्दशजगद्भ्योऽद्य नतिमाचक्ष्महे वयम् ।
वञ्चिता भेदजैर्मोहैरेतावन्तमनेहसम् ॥

यद्व्याख्याता विद्धसालभञ्जिका चित्रितार्थके ।
विद्धे स्तम्भे सालभञ्जिकायिता यत्र नायिका ॥

तनुरुचि यो न श्यामः कविः कवीनां स यदि घनश्यामः ।
कवते कमनश्यामः किमसूयाभिर्मुधैव नश्यामः ॥

इति यमुद्दिश्य रहसि निजात्मानमतिविनिन्दन्ति मनसि सञ्जातविविधवैकलव्यानि कुकविसाकल्यानि ।

लग्ने कीटे झषेष्वासनदलनिलयौ भूजकेतू धनुर्हेयेश काव्योऽथ नक्रे क्रियघटकटकांशेषु सौम्येनचन्द्राः ।
सौरिर्मेषे तुलांशे वृषमिथुनदले सैंहिकेयोऽथ जीवः
कौलीरे सिंहभागेऽप्यलियननवमांशे यदीयोऽवतारः ॥

आत्मा यश्शिवयोश्चिदम्बरमहायोगीन्द्रशाकम्भरिभ्राता श्रीद्वयसुन्दरीकमलजः काशीमहादेवजः ।
बद्धाञ्जल्यखिलप्रयोगसमयः कोशावलीवल्लभः
नम्रस्सत्प(स्संस)दि वावदीति स घनश्यामः कवीनां कविः ॥

पत्रं पुष्पं वर्तते यद्गृहे मे तत्ते वृध्द्यै लेखकेभ्यो ददामि ।
योगक्षेमे संसृतेर्ग्रन्थकीर्तौ चाचन्द्रार्कं देवि वाचे जय त्वम् ॥

मद्ग्रन्थवैरिषु महाकाली मद्वाङ्नुतिषु महालक्ष्मीः ।
मत्कृतिपाटीषु च महासरस्वती वसतु तरुणि मत्कविते ॥

धन्ये चतुष्षष्टिनिबन्धि(न्ध)कन्ये निर्मातुमन्या भगिनीर्मुहुस्ते ।
जीवामि शुक्रामि मृकण्डुजामि श्रीदाम्यहं सौभरितापसामि ॥

नमः सद्भ्यो महान्तो ये भस्मच्छन्नानला इव ।
नमोऽसद्भ्यो महान्तो ये भस्मच्छन्ना नला इव ॥

निश्शेषं भुवनं सशेषमपि हा विष्णुस्तदन्तर्गता
हे लोकाः शृणुतार्थिचातकमनस्कारे घनस्याम्यहम् ।
उन्मार्गा बलिदायिकद्वदमृगव्यूहाङ्गदेशे पुनः
श्यामाम्याग्रहभागतः किल घनश्यामोऽस्मि भूमण्डले ॥

त्वं चेत् किंपच दक्षसे पठ कृतिं नो चेद्गृहाणायुधं
व्यापारं कुरु पाशुपाल्यमथ वा धिक् केरलान् वा व्रज ।
मां नो चेत्परिभाषसेऽस्मि भणितो भक्त्या त्वया मत्कृते
सृष्टौ गुग्गुलुधूपजः परिमलो न स्यात्समासो यदि ॥

चोलेन्दोः सचिवोद्वहे मयि चतुष्षष्टिप्रतीबन्धकौ(के)
द्वित्रिश्लोकजगत्प्रजापतिगणो हा दुष्कवीनां जनः ।
अन्धोपस्थनयान्नरस्तुतिधनैः खद्योतवद् द्योतते
मन्ये जाग्रति चन्द्रचूडसुरते के ताम्रचूडारते ॥

युक्त्या जीवितविद्धसालतनवः सार्धप्रबन्धद्वयी-
कन्थाकृद्भवभूतिगीर्विवरणे सङ्कोचभाजोऽप्यमी ।
कीर्तौ दत्तदृशः शिरोधूतजयस्वा . . सुमाः कुर्महे
खेलेनोत्तरमेव रामचरितं टीकाकृतार्थोत्तरम् ॥

इतरपूर्वकविग्रथनाधिकाः सपुनरुक्तपदा भवभूतिजाः ।
अतिहिनामयति स्म तु चापयोः मनसि सद्यतराः सघृणैर्बुधैः ॥

ग्रन्थो(न्थे) मे मित इह विस्तरे(रो) वृथा स्यात्
गायत्र्यष्टकपठने बुधोऽलसो यत् ।
यल्लेखेष्वपि शिवरामकृष्णनाम्नां
यच्चायं वटुगणपाठने धनेच्छुः ॥

वृत्तोक्तिसालङ्कृतिभावफक्किकारसार्थसूत्राद्यनुवादचातुरीम् ।
पश्यन्तु सन्तोऽनुपमानमत्कृतप्रचण्डराहूदयदीपिकादिषु ॥
अथैतन्नाटकस्थायिसंविधानावबोधने ।
वस्तुपात्रादिनिर्देशः संग्रहात् क्रियते मया ॥
इदं कविभ्य इत्यस्मिन् पद्ये प्रामाणिकैरितः ।
वन्द्यो गणेशः पूर्वार्धे उत्तरार्धे सरस्वती ॥
श्रीमान् कालप्रियानाथो देवः सूत्रधरो नटः ।

* * * *

अथ कालिदासादिसमानकालिको भोजराजाश्रयः श्रीकण्ठनामा 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' इति श्लोकनिर्माणवेलागुणवशादानन्दभरितेन राज्ञैव भवभूतिरिति ख्यापितः कविः

'नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥'

'आवयोरन्तरं नास्ति'

इत्यादिवचनसिद्धान्तेन शिवरामकृष्णादिनाम्ना एकार्थतैव प्रामाणिकसंमतेत्यवगच्छन्नतितुच्छबौद्धकुलशासनपूर्वकं गोब्राह्मणवेदशास्त्रोद्धारणाय भगवत्पादावतारो भावीति स्वप्न(दशा)यामाज्ञापयतः साम्बशिवस्य प्रसादादद्वैतमेव जगदवलोकयन्नेष तदा मतान्तरग्रन्थाभावादवैरबुद्धिर्यथा तथायं स परब्रह्मणोऽपि 'सम्भवामि युगे युगे' इति प्रतिज्ञया लीलामानुषविग्रहस्य श्रीरामस्य चरितं चिकीर्षुः अविघ्नपरिपूरणाय प्रतिभाविशेषाय च पूर्वार्धोत्तरार्धाभ्यां गजाननसरस्वतीप्रणामात्मकं मङ्गलं चरीकर्ति—

इदं कविभ्यः पूर्वेभ्य इति । इदमिति सामान्ये नपुंसकम् । अत एव 'शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः' इति वाल्मीकिः, 'शक्यमर-

बिन्दसुरभिः' इति भर्तृमीढश्च। इदं नमोवाकं नम इत्युक्तिम्; 'नमउक्तौ नमोवाकः' इत्यगस्त्यः। पूर्वेभ्यः पुरातनेभ्यः अलौकिकेभ्य इत्यर्थः; वैदिकेभ्य इति यावत्। वेदानां लोकपूर्वत्वादिति भावः। 'यस्य निश्वसितं वेदाः' इति स्मरणात्। कविभ्यः कवये गणपतय इत्यर्थः; 'गणपतिं हवामहे कविं कवीनाम्' इत्यादिश्रुतेः, 'कविः शुक्रगजाननौ' इति जयः। कविभ्य इति पूजायां बहुत्वम्।

**End :**

येन नान्दी कृता तस्य भरतस्य वाक्यमिति सम्प्रदायः। अथ कविः पूर्वार्धेन रामकथाफलमाह—पापेभ्यश्च इति। या गङ्गेव पुनाति जगतो मातेव लक्ष्मीरिव 'इन्दिरा लोकमाता' इत्यमरः। वर्धयति च इयं कथा रामस्येति शेषः। मङ्गले ऐहिकफलरूपे साधुः मङ्गल्या। मनोहरा च आमुष्मिकफलदानेनेति भावः। 'स याति ब्रह्मणः स्थानम्' इति स्मरणात्। चत्रयं पादपूरणे।

अथ उत्तरार्धेन स्ववाणीप्रयोजनमाह—तामिति।

* * * *

भावयन्तु लालयन्तु 'आदरे लालने च स्याद्भावना' इति जयः।

अलमतिविस्तरेण ॥

**Colophon :**

इति महाराजपदमहनीयतुक्काजिराजगृहामात्येन मौनभार्गवकुलाकूपारचन्द्रचौण्डोबालाजिपौत्रेण कौण्डिन्यगोत्रपारावारनिस्तुलकौस्तुभतिम्माजिबालाजिदौहित्रेण काशीमहादेवतनूजेन शाकम्भरीपरमहंसचिदम्बरब्रह्मानुजेन नवरसभुवातिशायिचतुरचतुरधिकषष्टिप्रबन्धिदशभाषाभव्याष्टपदीपदपद्यवर्णविलसदन्यूनाक्षरमालिकायास्तवनकवनधौरन्धरीपारीणेन गीतगाधासहस्रचतुष्टयदिव्यदेवीताटङ्कलिपिकल्पकेन दुर्जनातिनिन्द्येन सज्जनाभिनन्द्येन

सुन्दरीकमलाजानिना वश्यवचस्सर्वज्ञसरस्वतीनामत्रयमण्डितेन श्रीराम-नवमीनिशीथजागरण एवारब्धपरिपूरिते उत्तररामचरितसञ्जीवनाख्य-टिप्पणे सप्तमोऽङ्कः संपूर्णः ॥

इति घनश्यामपण्डितविरचिते उत्तररामसञ्जीवनाख्यटिप्पणे सप्त-मोऽङ्कः ॥

Foll. 73*a*—79*a* contain an index of the stanzas contained in the above drama. Foll. 79*b* and 80 are left blank.

---

## R. No. 1353.

Paper. $11\frac{1}{4} \times 8\frac{7}{8}$ inches. Foll. 166. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a MS. of Bībliotheca Regia Monacensis in Germany.

### (*a*) वैखानसश्रौतसूत्रम्.
### VAIKHĀNASAŚRAUTASŪTRAM.

Foll. 1*a*—161*b*. Fol. 162 is left blank.

Same work as that described under R. No. 1336 *ante*.

Breaks off in the 20th Praśna.

The original German manuscript, which is said to have been acquired from Baroda, appears to be a copy of the MS. from which the one under R. No. 1336 has been transcribed for this library.

---

### (*b*) वैखानसप्रवरसूत्रम्.
### VAIKHĀNASAPRAVARASŪTRAM.

Foll. 163*a*—166*a*. Fol. 166*b* is left blank.

This forms the eleventh Praśna of the work described under No. 5 in pages 155—156 of the M. Seshagiri Sastri's Report No. 2.

Complete.

R. No. **1354.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 58. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Yajñanārāyaṇa Śāstri of Challapalli, Kistna district.

**श्रीराजमहाविद्या.**

ŚRĪRĀJAMAHĀVIDYA.

Similar to the work described under No. 6907 of the D.C.S. MSS., Vol. XIII.

Complete.

**Beginning:**

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीराद्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

ऐं आत्मतत्त्वं परिशोधयामि जुहोमि स्वाहा, क्लीं विद्यातत्त्वं परिशोधयामि जुहोमि स्वाहा, सौः शिवतत्त्वं परिशोधयामि जुहोमि स्वाहा। ऐं क्लीं सौः महाकारणदेहं परिशोधयामि जुहोमि स्वाहा।

**End:**

ध्यानम्—सकुङ्कुमविलेपनां . . बिकाम् । पञ्चपूजा ।

शङ्खं चक्रं गदाखड्गं पद्मं योनिं त्रिशूलकम् ।
तार्क्ष्यं धेनुं च शक्तिं च शार्ङ्गं नाराचकौस्तुभम् ॥
श्रीवत्साङ्कुशमुद्राश्च पञ्चदश्यां प्रकीर्तिताः ।

ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं सौभाग्यविद्येश्वरीश्रीपादुकां पूजयामि नमः ॥

## R. No. **1355.**

Paper. $11\frac{1}{4} \times 8\frac{5}{8}$ inches. Foll. 194. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Tiru. Śrīnivāsavarada Tātācārya of Villiyambākkam, Chingleput district.

शाब्दिकचिन्तामणिः.

ŚĀBDIKACINTĀMAṆIḤ.

By Gōpālakṛṣṇa Śāstrin, son of Vaidyanātha Sumati and disciple of Rāmabhadrādhvari, and honoured by King Vijayaraghunātha. Same work as that described under R. No. 143 *ante*.

The portion of the work beginning from the second Āhnika of the third Pāda of the first Adhyāya is said to have been completed by Anantanārāyaṇa Śāstri, elder brother of Anantavēṅkaṭēśvara and disciple of Gōpālakṛṣṇa Śāstrin.

Contains the first Āhnika of the first Pāda, the third Pāda from the second Āhnika and the first Āhnika of fourth Pāda in the first Adhyāya.

**Beginning:**

वन्दे सर्वेश्वरं सर्वशक्तिं सर्वार्थदायिनम् ।
सर्वज्ञं ज्ञानवपुषं विष्णुं सर्वार्थसिद्धये ॥
पाणिन्यादिमुनीन्द्राणां समष्टिं लोकविश्रुतम् ।
श्रीरामभद्रमखिनं वन्दे वाग्वृद्धये गुरुम् ॥
प्रणम्य परमात्मानं पाणिन्यादीन् गुरूनपि ।
चिन्तामणिं शाब्दिकानां कलये विदुषां मुदे ॥
विद्वत्प्रियेण विजयरघुनाथमहीभृता ।
पोषितः सर्वसत्कारैः पूर्णभक्तिप्रयोजितैः ॥
गोपालकृष्णशर्माहमिष्टसर्वार्थदायिनीम् ।
गुरुभक्तिं पुरस्कृत्य ग्रन्थान् कर्तुं समुत्सहे ॥

अथ यत् सप्रयोजनं तदेव प्रेक्षावदुपादेयम् । व्याकरणं तु न तथेति नारम्भणीयम् । अविहितत्वाच्च न विश्वजिन्न्यायेन कल्पनं स्यात् । उच्यते— प्रयोजनाभावेऽप्यवश्याध्येतव्यं व्याकरणम्, 'ब्राह्मणेन निष्कारणेन धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्यागमात् ।

* * * *

**Colophon:**

इति श्रीवत्सकुलतिलकवैद्यनाथसुमतिसूनोः वैयाकरणाचार्यसार्वभौमश्रीरामभद्राध्वरिगुरुचरणश्लाघितमतिकौशलस्य श्रीगोपालकृष्णशास्त्रिणः कृतौ शाब्दिकचिन्तामणौ प्रथमस्याध्यायस्य प्रथमपादे प्रथममाह्निकं समाप्तम् ॥

महाभाष्यमहाम्भोधिमहापारीणतार्चनान् ।
महात्मनः सदा वन्दे महाकीर्तीन् महागुरून् ॥

अनुदात्तङित आत्मनेपदम् । समाहारद्वन्द्वात् ङसिः । इदिति प्रत्येकं संबध्यते । उपदेश इत्यनुवृत्तं ङिदित्यस्य विशेषणम् ।

**End:**

एवमेवानुकर्षणार्थाः सर्वेऽपि चकारा भाष्ये प्रत्युक्ता इति सर्वेष्टसिद्धिः ॥

**Colophon:**

इति श्रीवत्सकुलतिलकवैद्यनाथसुमतिसूनोः वैयाकरणाचार्यसार्वभौमश्रीरामभद्राध्वरीन्द्रगुरुचरणश्लाघितमतिकौशलस्य श्रीगोपालकृष्णशास्त्रिणः कृतौ तन्महागुरुकानन्तवेङ्कटेश्वराग्रजश्रीमदनन्तनारायणशास्त्रिपरिपूरिते शाब्दिकचिन्तामणौ प्रथमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

उपग्रहाह्निकस्यान्तगमनेन महेश्वरः ।
प्रीयतां गुरुरूपो मे सच्चिदानन्दलक्षणः ॥
पातञ्जलसुधोदन्वत्पारावारीणतार्चनान् ।
पादं तुरीयमारिप्सुः प्रपद्येऽहं महागुरून् ॥

आकडारादेका संज्ञा ॥ कडारादिति पञ्चमीनिर्देशादाकारः प्रथमान्तपदम् ।

* * * *

एतच्चान्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते इति प्रत्ययोत्तरपदयोश्चेत्यत्र ज्ञापनात् सिद्धम् ॥

**Colophon:**

इति श्रीवत्सकुलतिलकवैद्यनाथसुमतिसूनोः वैयाकरणाचार्यसार्वभौमश्रीरामभद्राध्वरीन्द्रगुरुचरणश्लाघितमतिकौशलस्य श्रीमद्गोपालकृष्णशास्त्रिणः कृतौ तन्महागुरुकानन्तवेङ्कटेश्वराग्रजश्रीमदनन्तनारायणशास्त्रिपरिपूरिते शाब्दिकचिन्तामणौ प्रथमस्याध्यायस्य चतुर्थपादे प्रथममाह्निकम् ॥

आकडाराह्निकस्यान्तगमनेन महेश्वरः ।
प्रीयतां गुरुरूपो मे सच्चिदानन्दलक्षणः ॥

---

## R. No. 1356.

Paper. 11 × $8\frac{7}{8}$ inches. Foll. 90. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Tāṅgal Rāmasvāmidīkṣitar of Viriñcipuram.

### शिवधर्मोत्तरखण्डः.
### ŚIVADHARMŌTTARAKHAṆḌAḤ.

On doctrin esconnected with Śaivism. This is different from the work described under No. 2208 of Dr. Rajendra Lal, Mitra's Catalogue, but is apparently the same as the one mentioned on page 195 (*a*) of Dr. Burnell's Catalogue.

Apparently complete in the following twelve Adhyāyas.

(१) गोषडङ्गविधानम्.
(२) विद्यादानफलम्.
(३) पञ्चमहायज्ञगुणाध्यायः.
(४) दानस्वरूपनिरूपणम्.
(५) शिवधर्मस्वरूपकथनम्.
(६) पापभेदनिरूपणम्.
(७) नरकविशेषकथनम्.
(८) प्रसवाख्यानम्.
(९) स्वर्गनरकचिह्नकथनम्.
(१०) ज्ञानयोगकथनम्.
(११) प्रायश्चित्तकथनम्.
(१२) गोमूत्रलोकवर्णनम्.

**Beginning :**

ज्ञानशक्तिधरं शान्तं कुमारं शङ्करात्मजम् ।
देवारिसूदनं स्कन्दमगस्त्यः परिपृच्छति ॥
भगवा(व)न् दर्शनात्तुभ्यमन्त्यजस्यापि सद्गतिः ।
सप्तजन्मनि विप्रश्च स्वर्गाद्भ्रष्टः प्रजायते ॥
तेनासि नाथ भूतानां सर्वेषामनुकम्पकः ।
अतः सर्वहितं धर्मं सङ्क्षेपात् प्रब्रवीम्यहम् ॥
धर्मा बहुविधा देव्या देवेन कथिताः किल ।
ये स्तु(तु)श्रुतास्त्वया स्स(स)र्वे पृच्छामि त्वामहं ततः ॥
किंप्रधानाः शिवे धर्माः शिववाक्यं च कीदृशम् ।
लिङ्गेऽर्चितः शिवः केन विधिना संप्रसीदति ॥
विद्यादानं च सर्वेषां दानानामुत्तमं किल ।
तच्च श्रुतं द्विजेन्द्राणां नान्येषां समुदाहृतम् ॥
तत्पुण्यं सर्ववर्णानां जायते केन कर्मणा ।
ज्ञेयं कतिविधं तच्च विद्यादानमनुत्तमम् ॥
कानि कृत्वैव कर्माणि गृहिनः(णः) स्वर्गत(ा)ः पुनः ।
मनुष्यलोके संभूता योगं विन्दन्ति शङ्करम् ॥
कर्मयज्ञस्तपोयज्ञः स्वाध्यायोऽध्यायनिर्वृतः ।
ज्ञानयज्ञं च पञ्चैते महायज्ञाः प्रकीर्तिताः ॥

एषां च पञ्चयज्ञानामुत्तमं कतमः स्मृतः ।
एतद्यज्ञतरा(रता)नां च प्रदाने कीदृशं फलम् ॥
धर्माधर्मप्रभेदाश्च कि(कि)यन्तः परिकीर्तिताः ।
तत्साधनानि कतिधा गतयश्च तदात्मकाः ॥
स्वर्गी नारकिणां पुंसामायातपतनं क्षितौ ।
कानि चिह्नानि जायन्ते भुङ्क्ते शेषेण कर्मणा ॥
संसारसागराद् घोराद्धर्माधर्मोर्मिसङ्कुलात् ।
गर्भादिदुःखफेनाढ्याम्मु(न्मु)च्यते(न्ते) देहिनः कथम् ॥

* * * *

इति सञ्चोदितः स्कन्दः सम्प्रश्नार्थानुभासकः ।
प्रत्युवाच महासेनः प्रणिपत्य महेश्वरम् ॥
स्वर्गापवर्गफलदं नरकार्णवतारणम् ।
शिवधर्मोत्तरं नाम शास्त्रमीश्वरभाषितम् ॥

**End:**

नाकाले लीयते राजा पीड्यते न च शत्रुभिः ॥
शृणोति यश्च सततं शिवधर्मं नराधिप ।
तस्य देशे भवेन्नित्यं सर्वेष्टं देहिनां सदा ॥
एकश्लोकमथार्धं वा वाचयेद्भावयेत्ततः ।
सदानुमोदते भक्त्या शिवलोके महीयते ॥

**Colophon:**

इति शिवधर्मोत्तरशास्त्रे गोमूत्रलोकवर्णनं नाम द्वादशोऽध्यायः ॥

---

## R. No. 1357.

Paper. 11 × 8¾ inches. Foll. 33. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Rāmasvāmidīkṣitar of Viriñcipuram.

वाक्यसुधाटीका.

VĀKYASUDHĀṬĪKĀ.

This is a commentary on Śaṅkarācārya's Vākyasudhā, which is an original work on the leading principles of the Advaita school of the Vēdānta. By Brahmānandabhāratīmuni, pupil of Ānandabhāratī, and Rāmānandamuni. He also mentions with respectful homage Bhāratītīrtha and Vidyāraṇya.

The work referred to on page 91*a* of Burnell's Catalogue as Vākyasudhāvyākhyā is apparently the same as this.

Complete.

**Beginning :**

कारणं खदि(चादि)जगतां मारणार्थमनागसम् (?) ।
वारणाननमात्मानमद्वयं समुपास्महे ॥
परात्या(पश्यन्त्या)दिदेहां प्रणताभीष्टदायिनीम्
सत्यज्ञानानन्दरूपां ध्यायेऽनन्यां सरस्वतीम् ॥
अभिषिच्य कृपावर्षैरात्मस्थं यः करोति माम् ।
तं सर्वसाक्षिणं वन्दे रामानन्दमुनीश्वरम् ॥
यत्कटाक्षसुधासिन्धौ मज्जता पुण्यपाकतः ।
मया ज्ञानमणिर्लब्धस्तमानन्दगुरुं भजे ॥
नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
मया वाक्यसुधाटीका यथामति विरच्यते ॥
न ख्यातिलाभपूजेच्छा टीकाकरणकारणम् ।
न विद्वत्ताबलं वात्र मुक्तिरेव हि कारणम् ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नपरिसमाप्तिप्रचयगमनाभ्यां शिष्टाचार-परिपालनाय च केवलकूटस्थप्रत्यग्बोधरूपपरमात्मस्वरूपानुस्मरणलक्षणं मङ्गलमाचरन् सच्चिदानन्दाखण्डैकरसस्वरूपावस्थानलक्षणस्य मोक्षस्य तत्त्वमस्यादिमहावाक्यस्यार्थापरोक्षज्ञानफलत्वात् वाक्यार्थज्ञानस्य चान्व-यव्यतिरेकाभ्यां पदार्थपरिशोधनपूर्वकत्वात् ।

* * * *

श्रीमद्भाष्यकारैः प्रतिपादितमर्थं हृदि निधाय प्राण्यनुजिघृक्षया दृग्दृश्यविवेकद्वारा प्राधान्येन त्वम्पदार्थपरिशोधनपरमिदं प्रकरणमारभमाणः परमकृपानिधिः श्रीभारतीतीर्थगुरुः प्रकरणप्रतिपाद्यमानमर्थं सङ्क्षिप्य प्रथमश्लोकेन तावद्दर्शयति—

रूपं दृश्यं लोचनं दृक् तद्दृश्यं दृक्तु मानसम् ।
दृश्या धीवृत्तयसः साक्षी दृगेव न तु दृश्यते ॥

लोके चक्षुरिन्द्रियग्राह्यं यद्रूपमस्ति असन्दृश्यं भवति । तद्ग्राहकं चक्षुरिन्द्रियं स्वग्राह्यरूपापेक्षया दृग्भवति द्रष्टृ भवति । तथा तत्पुनः चक्षुरिन्द्रियं स्वस्मादप्यान्तरस्य मनसो दृश्यं भवति। स्वभावस्य चक्षुरिन्द्रियापेक्षया मानसमपि दृग्भवति द्रष्टृ भवति। मनसः सर्वेन्द्रियावभासकत्वात्सामर्थ्यं द्योतयति तुशब्दः।

**End:**

अत एव मोक्षशास्त्रस्यापि साफल्यं स्यादित्ययमेवास्य प्रकरणस्य समस्तवेदान्तशास्त्रस्य च महातात्पर्यविषयत्वेन पिण्डितोऽर्थः। तस्मात्सर्वमनवद्यम् ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दभारतीमुनिवर्यशिष्यब्रह्मानन्दभारतीमुनिप्रक्लृप्ता वाक्यसुधाटीका समाप्ता ॥

वन्दे वरप्रदमहं वरवारणेन्द्रं वक्रस्स(वक्त्रे स)दा क्षितिभृदीश्वर(जातनूजम्)।
विघ्नेश्वरं विबुधवन्दितपादपद्मं संसारसम्भवभयापहमाश्रितानाम् ॥

---

## R. No. 1358.

Paper. 10⅜ × 9⅝ inches. Foll. 55. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Paṭṭābhirāma Śāstri of Vizianagaram.

आपस्तम्बीयाध्वरतन्त्रव्याख्या—प्रयोगरत्नमाला,
ĀPASTAMBĪYĀDHVARATANTRAVYĀKHYĀ: PRAYŌGARATNAMĀLĀ.

By Cauṇḍappācārya. Same work as that described under R. No. 795 *ante*.

Contains the third and the fourth Paṭalas of the second Praśna.

**Beginning:**

कर्मब्रह्माध्वनीनस्य मन्त्री भूपतिभूपतेः ।
व्याचष्टे चौण्डपाचार्यः संमार्गादिकृतिं कृती ॥

पत्नीसंनहनमेते(के) पूर्वं समामनन्ति स्रुक्संमार्जनमेके । यदा पत्नीसंनहनं पूर्वं तदा संप्रैषनिवृत्तिः क्रमविरोधादित्याह आनुपूर्व्यतायां इति लिङ्गविरोधात् तूष्णीं यवमयमिति लिङ्गाच्च पत्नीसंनहनमेके पूर्वमिति संनहनमात्रप्रतिकर्षः ।

* * * *

**Colophon:**

इति श्रीप्रयोगरत्नमालायां द्वितीयप्रश्ने तृतीयः पटलः ॥

**End:**

ब्रह्मणानुज्ञात आश्रावय ओं श्रावयाश्रावय ओमाश्रावयेति वा श्रावयत्यथाग्नीध्रोऽस्तु श्रौषडिति प्रत्याश्रावयति ॥

सामिधेन्यादिसत्तन्त्रमन्त्रव्याख्यासुगन्धिभिः ।
सूक्तिप्रसूनैः पुष्णातु पुमर्थान् पुरुषोत्तमः ॥

**Colophon:**

इति प्रयोगरत्नमालायां द्वितीयप्रश्ने चतुर्थः पटलः ॥

कर्मब्रह्माध्वनीनस्य मन्त्री भूपतिभूपतेः ।
व्याचष्टे चौण्डप्पाचार्यः प्रवरादिकृतिं कृती ॥

## R. No. 1359.

Paper. $10\frac{5}{8} \times 9\frac{5}{8}$ inches. Foll. 37. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Kumārasvāmi Śāstri of Pedakallapalli.

(*a*) रामायणकथाविमर्शः.

RĀMĀYAṆAKATHĀVIMARŚAḤ.

Foll. 1—31*b* and 32.

Similar to the work described under No. 1909 of the D.C.S. MSS., Vol. IV, Part I. The story contained in the Rāmāyaṇa is briefly given in this work together with the time of the occurrence of the leading events.

Complete; as found in the Skāndapurāṇa.

**Beginning:**

स्वामिनो जननानन्त(र)मष्टमे वर्षे उपनयनम् । द्वादशे विश्वामित्रेण निर्गमः । ततस्ताटकावधयज्ञसंरक्षणसीतापाणिग्रहणाद्यनेकव्यापारयुक्तस्य श्रीरामस्य पुनरयोध्याप्रवेशपर्यन्तं द्वादश संवत्सरा एव । तत्र अयोध्यायां द्वादश संवत्सराः ।

**End:**

अभिषेके ततस्तत्र तदा रामस्य धीमतः ।
भूमिः सस्यवती चैव फलवन्तश्च पादपाः ॥
गन्धवन्ति च पुष्पाणि वभूवू राघवोत्सवे ।

**Colophon:**

इति वेङ्कटार्यकृतश्रीरामायणसारसङ्ग्रहे अर्धदिनोत्तरविंशाद्दि(तिदि)नसम्मितो युद्धकाण्डः समाप्तः ॥

---

(*b*) रामायणमाहात्म्यम्.

RĀMĀYAṆAMĀHĀTMYAM.

Foll. 31*b*—37*a*. Fol. 37*b* is left blank.

Fol. 32 belongs to the previous work.

Contains two Adhyāyas, one taken from the Pādmapurāṇa and the other from the Skāndapurāṇa. The former describes the daily duties of Rāma after his coronation and the latter treats of the greatness of the Rāmāyaṇa.

Complete.

**Beginning:**

रामं रामानुजं सीतां भरतं भरतानुजम् ।
सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः ॥

श्रीरामस्याभिषेकानन्तरं नित्यकृत्यदिनचर्या । पाद्मे पुराणे पार्वती प्रतीश्वर उवाच—

अथ रामस्तु वैदेह्या राजभागान् मनोरथान् ।
बुभुजे . . . . . . . . त्रिभिश्चारुविलोचनः ॥

* * * *

एवं प्रशासतो भूमिं राघवस्य महेश्वरः ।
अत्ययाद्वर्षसाहस्रं रममाणस्य सीतया ॥

**Colophon:**

इति पाद्मे पुराणे उत्तरखण्डे उमामहेश्वरसंवादे त्रयोदशोऽध्यायः ॥

प्रणम्य सर्वलोकेशं ब्रह्माणं शाश्वतं विभुम् ।
वसिष्ठः परिपप्रच्छ सर्वमानवतां वरम् ॥
ब्रूहि मे भगवंस्तत्त्वं रामस्य चरितं प्रति ।
श्रावकस्यापि यत्पुण्यं श्रोतुश्चापि विशेषतः ॥
तयोर्नियामनं चैव आनुपूर्व्येण देहिनः ।
चरितं शृण्वतां पुण्यं व्रतं चानुवदस्व भो ॥

**End:**

इत्येवं ब्रह्मणोक्तस्तु वसिष्ठो मुनिसत्तमः ।
अत्यन्ताश्चर्यसंयुक्तो मुनीनामपि सन्निधौ ॥
श्रुत्वा रामायणं कृत्स्नं प्रत्यहं चानुमोदते ।
स्वयं रामायणं कृत्वा प्रहर्षं परमं गतः ॥

श्रृण्वन्ति साधवो लोके तस्माद्रामायणं परम् ।
वाञ्छितार्थप्रदं सर्वं सम्पदां हि विवर्धनम् ॥

**Colophon:**

इति श्रीस्कान्दे महापुराणे ब्रह्माण्डे रामायणमहोत्सववर्णनं नाम पञ्चाशच्छततमोऽध्यायः ॥

---

R. No. **1360.**

Paper. $11\frac{1}{8} \times 8\frac{5}{8}$ inches. Foll. 45. Lines, 18 in a page. Grantha. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Śivarāma Śāstri of Trichinopoly.

बोधायनगोपालकारिका.

BŌDHĀYANAGŌPĀLAKĀRIKĀ.

A metrical treatise by Gōpāla regarding the post-natal rites and obsequies to be performed as laid down by Bōdhāyana.

Complete.

**Beginning:**

पुत्रं जातं पिता श्रुत्वा स्नात्वा दानादि कारयेत् ।
अस्त्र्य इत्यनुवाकेन निवीती मन्त्रयेत्सुतम् ॥
नोपयेत् क्षात्त्रियैः षड्भिर्यूयंपातान्तमेव च ।
अङ्गादिति समारोप्य पितुरङ्के शिशुं ततः ॥
अश्मा भवेति चाघ्राय मूर्धानं बालकस्य च ।
नक्षत्रनाम बालस्य दक्षिणश्रवणे वदेत् ॥

* * * *

**Colophon:**

इति बोधायनगोपालकारिकायां पूर्वविषयः समाप्तः ॥

**End:**

शोचिषोऽभिमुखं कृत्वा हुत्वा मिन्दाहुतिद्वयम् ।
पक्वं च पूर्ववद्धुत्वा ततः पञ्चदशाहुतीः ॥

पालाशाश्च चतस्रः स्युरग्ने व्रतपते ततः ।
अनुवाकश्च . . . . . . . प्राशनं ततः ॥

**Colophon :**

इति बोधायनगोपालकारिकायामपरविषयः समाप्तः ॥ गोपालकारिका समाप्ता ॥

Foll. 16*b* and 45*b* are left blank and foll. 44*b* and 45*a* contain a few stanzas taken from a work in astrology and dealing with यात्रा (starting).

---

R. No. **1361.**

Paper. 11 × 8¾ inches. Foll. 50. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. S. Gōpālācārya of Villiyambākkam.

तत्त्वचिन्तामणिदीधितिप्रकाशिका.

TATTVACINTĀMAṆIDĪDHITIPRAKĀŚIKĀ.

This is a commentary on the Tattvacintāmaṇidīdhiti of Raghunāthaśirōmaṇi. By Gadādharabhaṭṭācārya.

Contains the Vyāptivāda in the Anumānakhaṇḍa.

**Beginning :**

अन्योन्याभावगर्भव्याप्तिद्वयाभेदमाशङ्क्याह—अत्यन्तेति । अत्यन्ताभावगर्भवदिति । अत्यन्ताभावगर्भव्याप्तिद्वयं यथा सामान्यविशेषभेदेन उक्तमित्यर्थः । एतेन सामान्यविशेषभेदेन भेदगर्भव्याप्तिद्वयानभिधानन्यूनतेति सूचयित्वा उक्तरीत्याभेदे ग्रन्थकारस्वरस इति दर्शितम् ।

**End :**

लाघवादित्यस्य व्यभिचारोन्नायकतापेक्षयेत्यादिः । साध्यव्यापकतामात्र इति दूषणौपयिकान्तर्गतसाधनाव्यापकत्वांशस्य व्यवच्छेदः । व्यभिचारसाधने व्यापकस्य साध्यव्याप्यत्वनियमेन स्वनिष्ठव्याप्तिसङ्क्रामकताभावादनतिप्रसङ्गादिति ॥

**Colophon :**

गादाधर्यां व्याप्तिवादः समाप्तः ॥

## R. No. 1362.

Paper. 11 × $8\frac{3}{4}$ inches. Foll. 14. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a palm-leaf MS. of M.R.Ry. S. Gōpālācārya of Villiyambākkam.

### नाथमुनिप्रपन्नत्वसमर्थनम्.

### NĀTHAMUNIPRAPANNATVASAMARTHANAM.

This treatise purports to maintain that Nāthamuni is a Prapanna and that he sought and obtained salvation through Prapatti, thus contradicting the view of those who thought that he considered Bhakti as the sole means of obtaining salvation. The work is also called Nāthamunivijaya. By Dēsikasudhī, a disciple of Aṇṇayārya.

Complete.

**Beginning :**

जयति गुरुरण्णयार्यो जगति गतिद्वयं(युगं) प्रपेदुषां विदुषाम् ।
रुन्धे मनोऽन्धकारग्रन्थेर्गन्धर्वकन्धरः सन्धिम् ॥
सत्यां समग्रभक्तौ समधिकशक्तौ सलालसो मुक्तौ ।
प्रायुङ्क्त यः प्रपत्तिं विप्रतिपत्तिं विहन्त्वसौ नाथः ॥
व्याघ्रातमात्रदृष्ट्या व्याकुलितां कैश्चिदल्पसन्तुष्ट्या ।
देशिकसुधीरमृष्या ? द्रढयति नाथप्रपन्नतां हृष्ट्या ॥
प्राचामाचार्याणां वाचामाचान्तसिन्धुबन्धूनाम् ।
अनुवादमपविवादं वाण्या श्रेण्या चराणि गीर्वाण्याः ॥

इह खलु निखिलमुनिवर(नि)करसमधिकनिरवधिकपरिकरसमग्रशक्तिकोऽपि भगवान् नाथमुनिरपि सोढकालविलम्बः स्वतन्त्रप्रपत्तिमवललम्बे इति समीचीनसम्प्रदायसरणिसङ्गिनः सङ्गिरन्ते ।

**End :**

तदेवं नाथमुनेः साधनभक्तिनिष्ठत्वेना(न)न्यथासिद्धसाधकलेशाभावात् प्रबलबहुलविपुलबाधसत्त्वाच्च नाथमुनिः स्वतन्त्रप्रपत्तिनिष्ठः फलभक्तिनिष्ठश्च न साधनभक्तिनिष्ठ इति निष्कण्टको घण्टापथः ॥

देशिकदासेनासौ शिष्येण श्रीमदण्णयार्याणाम् ।
नाथमुनिविजयनामा कृतिरभिरामा कृता सतां प्रीत्यै ॥

**Colophon:**

नाथमुनेः प्रपन्नत्वसमर्थनं समाप्तम् ॥

---

R. No. **1363.**

Paper. 11 × 8½ inches. Foll. 50. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Paṭṭābhiramamūrti of Vizianagaram.

आपस्तम्बीयाध्वरतन्त्रव्याख्या—प्रयोगरत्नमाला.

ĀPASTAMBĪYĀDHVARATANTRAVYĀKHYĀ: PRAYŌGARATNAMĀLĀ.

By Caundappācārya. Same work as that described under R.No.1795 *ante*.

Wants the beginning in the fourth Pāṭala of the third Praśna and ends in the fourth Praśna.

**Beginning:**

प्रज्ञातवान् । अतएवास्मद्गृहे न यज्ञो वावृधे पुनः पुनरवर्धत स यज्ञोऽस्माभिरिज्यमानानां देवानामधिकं पालयिता भवतु । स यज्ञोऽस्मानप्यधिपतन्नधिकमनुष्ठानस्य पालकान् करोतु । वयमपि तस्य यज्ञपुरुषस्य प्रसादनात् रयीणां यज्ञसाधनानां धनानां पतयो भूयास्म ।

* * * *

**Colophon:**

इत्यापस्तम्बीयाध्वरतन्त्रस्वतन्त्रव्याख्यायां प्रयोगरत्नमालायां तृतीयप्रश्ने चतुर्थः पटलः ॥

**End:**

प्रवसद्याजमानान्ततन्त्रव्याख्यासुगन्धिभिः ।
सूक्तिप्रसूनैः पुष्णातु पुरुषान् पुरुषोत्तमः ॥
संकल्पादिप्रवासान्तपदार्थोक्तिसमुज्ज्वलः ।
चतुर्थो व्याकृतः प्रश्नो याजमानाभिधानवान् ॥

**Colophon:**

इत्यापस्तम्बीयाध्वरतन्त्रस्वतन्त्रव्याख्यायां प्रयोगरत्नमालायां चतुर्थप्रश्ने चतुर्थः पटलः ॥

समाप्तश्चतुर्थः प्रश्नः ॥

---

R. No. **1364.**

Paper. $11\frac{3}{4} \times 9$ inches. Foll. 56. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a palm-leaf MS. of M.R.Ry. Sthalaśāyi Ayyaṅgār of Agaram.

(*a*) व्यावहारिकसत्यत्वखण्डनम्.

VYĀVAHĀRIKASATYATVAKHAṆḌANAM.

Foll. 1*a*—10*b*.

Similar to the work described under R.No. 608(*b*) *ante.* A refutation of the view that the phenomenal universe possesses only a phenomenal and relative reality: by Varadācārya of Kauśikagōtra and a disciple of Lakṣmaṇayōgin.

Complete.

**Beginning:**

श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

आकर्णयध्वमाचार्या वर्णयामस्तावद्वेदान्तनिर्णयमवधूतदुर्नयविप्रजापं भवतु च लब्धवर्णानां भवतां कर्णामृतत्वाय । अत्रानाद्यविद्यासञ्चयवञ्चितहृदया मृषावादिनः केचिदाहुः—सत्यत्वं त्रिविधं पारमार्थिकं व्यावहारिकं प्रातिभासिकं चेति । तत्र पारमार्थिकसत्यत्वं निर्विशेषस्य परस्य ब्रह्मणः ।

**End:**

ननु नेह नानास्तीत्यभेदबोधकानां वाक्यानां का गतिरिति नाशङ्कनीयम्; उपक्रमोपसंहारानुगुण्येन शरीरशरीरिभावलक्षणार्थान्तरपरत्वेन निर्णयादिति सर्वं समञ्जसम् ॥

**Colophon:**

इति व्यावहारिकसत्यत्वखण्डनम् ॥

(*b*) प्रपञ्चमिथ्यात्वखण्डनम्.

PRAPAÑCAMITHYĀTVAKHAṆḌANAM.

Foll. 11*a*—22*b*.

Similar to the work described under R.No. 608(*g*) *ante*.

Complete.

**Beginning:**

इह कतिचिदतिसमुचितदुरितविन्ध्याटवीं सञ्चरन्तः प्रपञ्चस्य मिथ्यात्वमाहुः । तद्विषयमिदमनुमानं प्रयुञ्जते—प्रपञ्चो मिथ्या दृश्यत्वात्; यत्र दृश्यत्वं तत्र मिथ्यात्वं यथा शुक्तिरूप्यम् । घटादयोऽपरमार्थाः व्य(ा)वर्तकत्वात् रज्ज्वधिष्ठानसर्पादिवदिति ।

**End:**

ननु क्वचिद्बाधदर्शनाद्भागासिद्धो हेतुरिति न वाच्यम्; तस्य प्रतिपन्नोपाधिजन्यबाधस्याहेतुत्वादित्युपरमः ॥

**Colophon:**

प्रपञ्चमिथ्यात्वखण्डनं सम्पूर्णम् ॥

(*c*) आश्रयानुपपत्तिः.

ĀŚRYĀNUPAPATTIḤ.

Foll. 22*b*—27*b*.

A short critical treatise showing with authoritative Vedic quotations that Avidyā or primordial nescience cannot be said to find its abode in the Supreme Brahman.

Complete.

**Beginning:**

श्रीमल्लक्ष्मणयोगीन्द्रसिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

प्रत्यस्तमितभेदं विज्ञानैकरसं ब्रह्म अनाद्यविद्यातिरोहितस्वरूपमनन्तभेदात्मकं प्रपञ्चं पश्यतीति मृषावादिनामाघोषः ।

**End :**

तस्मान्नित्यमुक्तस्य नित्यसर्वज्ञस्य ब्रह्मणोऽविद्याश्रय(त्व)वचनं दीपस्य तिमिराश्रयत्ववचनवदपहास्यम् ॥

**Colophon :**

इत्याश्रयानुपपत्तिः ॥

---

(*d*) तिरोधानानुपपत्तिः.

TIRŌDHĀNĀNUPAPATTIḤ.

Foll. 27*b*—28*b*.

A short pamphlet showing that Avidyā cannot be said to conceal the true nature of the Supreme Brahman.

Complete.

**Beginning :**

किं च ब्रह्मणस्तिरोधानमविद्याकृतम् । तदुत्पत्तिप्रतिबन्धकत्वं तत्स्वरूपविरोधो वा विनाशो वा स्यात् ? उत्पत्तिशून्यत्वाद्ब्रह्मणः नाद्यः । नोत्तरः नित्यत्वाद्ब्रह्मणः । न चाविद्याजन्यप्रपञ्चभ्रमाधारत्वमेव ब्रह्मणस्तिरोधानमिति वाच्यम् ।

**End :**

तस्माद्ब्रह्मणि स्वरूपातिरिक्ताकारानभ्युपगमात्तस्य तिरोधानं तन्निवृत्तिरेव स्यात् । अतो ज्ञानैकरसं ब्रह्म अविद्यातिरोहितमित्यसङ्गतम् ॥

**Colophon :**

इति तिरोधानानुपपत्तिः ॥

---

(*e*) स्वरूपानुपपत्तिः.

SVARŪPĀNUPAPATTIḤ.

Foll. 28*b*—29*b*.

Herein it is stated with reasons that the nature of Avidyā, as postulated by the followers of the Advaita school of Vēdānta, cannot be defined.

Complete.

**Beginning:**

किं च अविद्या सत्या असत्या वा । नाद्यः भेदवादापत्तेः । न द्वितीयः असत्यत्वे दोषमूलत्वस्य प्रयोजकत्वाद्दोषान्तरापेक्षायामनवस्था स्यात् । न चाविद्यायाः स्वसिद्धौ दोषान्तरापेक्षा नास्तीति वाच्यम् ।

**End:**

किं च न ह्यविद्यायाः पारमार्थिकत्वं सुवचम्, ज्ञाननिवर्त्यत्वानुपपत्तेः भेदवादप्रसङ्गाच्च । नाप्यपारमार्थिकत्वं भ्रमोपादानत्वानुपपत्तेः । तस्मादविद्यास्वरूपमपि दुर्निरूपम् ॥

**Colophon:**

इति स्वरूपानुपपत्तिः ॥

---

(*f*) लक्षणानुपपत्तिः.

LAKṢAṆĀNUPAPATTIḤ.

Foll. 29*b*—31*a*.

Similar to the work described above.

Complete.

**Beginning:**

किं च किमविद्याया लक्षणम्? अवाच्यत्वानधिकरणत्वं वा, तुच्छत्वं वा, सत्त्वासत्त्वात्यन्ताभावाधिकरणत्वं वा, ब्रह्मतुच्छविलक्षणत्वं वा ?। न प्रथमः; सदसद्विलक्षणत्वेन वाच्यत्वमङ्गीकुर्वतः स्ववचनव्याघातात् ।

**End:**

तत्किं ब्रह्मतुच्छविलक्षणत्वं सत्यमसत्यं वा? नाद्यः असत्ये भावरूपाज्ञाने सत्यस्य तस्यावस्थानं व्याहन्येत । न द्वितीयः ब्रह्मतुच्छतादात्म्यप्रसङ्गात् ॥

**Colophon:**

इति लक्षणानुपपत्तिः ॥

---

(*g*) प्रमाणानुपपत्तिः.

PRAMĀṆĀNUPAPATTIḤ.

Foll. 31*a*—34*b*.

Herein it is explained that the grounds set forth by Advaitins for establishing the existence of what is called 'Avidyā' are unacceptable.

Complete.

**Beginning :**

यच्च भावरूपाज्ञानसद्भावे प्रमाणमाहुः—अहमज्ञो मामन्यं च न जानामीति प्रत्यक्षमेव प्रमाणम् । न चेदं ज्ञानप्रागभावगोचरमिति वाच्यम्; तस्य षष्ठप्रमाणागोचरत्वात् ।

**End :**

नापि जीवब्रह्मैक्यान्यथानुपपत्तिप्रसूतार्थापत्तिस्तत्प्रमाणम्; शरीरशरीरिभावनिबन्धनेनास्य प्रतिपादनाविरोधः ॥

**Colophon :**

इति प्रमाणानुपपत्तिः ॥

---

(*h*) अविद्याखण्डनम्.

AVIDYĀKHAṆḌANAM.

Foll. 35*a*—37*a*.

A hostile criticism of the doctrine of Avidyā as propounded by the Advaita school, tending to show in particular that the eradication of Avidyā would not be possible by any means.

Complete.

**Beginning :**

किमज्ञानस्य निवर्तकं जीवब्रह्मैक्यगोचरज्ञानं वा? शुद्धब्रह्मस्वरूपं वा, जीवस्वरूपं वा? नाद्यः अभेदज्ञानस्य वृत्तिज्ञानतया मिथ्यात्वेनानिवर्तकत्वात्, निवर्तकत्वेऽपि तस्य निवर्तकान्तराभावेन निश्शेषनिवृत्त्ययोगात् ।

**End :**

आद्ये ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वव्याघातः । अन्त्ये ब्रह्मणोऽनादित्वेन प्रपञ्चभ्रमो न स्यात् । न हि निवृत्तौ सत्यां निवर्त्यं तिष्ठतीति वक्तुं शक्यम्— इत्यलमतिदूषणायासेन ॥

**Colophon:**

अविद्याखण्डनं सम्पूर्णम् ॥

---

(*i*) भेदसमर्थनम्.

BHĒDASAMARTHANAM.

Foll. 37*a*—45*a*.

A treatise endeavouring to maintain the distinction between the individual self and the Supreme Brahman.

Complete.

**Beginning:**

इह कतिचिदतिचिरसमुपचितदुरितसञ्चया वञ्चयन्ति भेदतत्त्वम् । एष खलु तेषामाघोषः—प्रमाणात्प्रमेयसिद्धिरिति तेषां समयः । तत्र भेदे न किञ्चित्प्रमाणं पश्यामः । प्रत्यक्षमिति चेन्न, शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रवत्प्रत्यक्षस्यापि निर्विशेषवस्तुग्राहित्वस्यावर्जनीयत्वात् ।

**End:**

ननु निर्गुणमित्यादिश्रुतेः का गतिरिति चेत् हेयगुणनिषेधपरत्वेन निर्णयात्, विजरो विशोक इति वाक्यान्तरानुगुण्याच्च, अधिकं तु भेदनिर्देशादित्यादि भेदशब्दप्रसङ्गाच्च ॥

**Colophon:**

भेदसमर्थनं सम्पूर्णम् ॥

---

(*j*) परतत्त्वनिर्णयः.

PARATATTVANIRṆAYAḤ.

Foll. 45*a*—49*b*.

In this work the author tries to establish that Nārāyaṇa of transcendental qualities is the Supreme Brahman, and that the external world is real and the individual self is distinct from the Supreme Brahman. It is a refutation of the view of the Advaita school of Vēdānta that the Supreme Brahman is devoid of all qualities.

Complete.

**Beginning:**

अथ परतत्त्वं निश्चीयते—

अथातो ब्रह्मजिज्ञासेति तापत्रयातुरैरमृतत्वाय ब्रह्म ज्ञातव्यमिति प्रतिज्ञातं सूत्रकारेण। व्याख्यातं च भाष्यकारैः – तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्य इति। श्रूयते च ब्रह्मज्ञानस्य मोक्षसाधनत्वम्।

**End:**

तस्मादनन्तकल्याणगुणगणः निर्दोषो नारायणः शिवादिशब्दवाच्यः परमात्मा जगत्कारणमिति सर्वमवदातम्।

जगतः परमार्थत्वं तन्मृषात्वानिराकृतिम्।
अविद्यादोषभङ्गं च भेदं विश्वेशयोरपि ॥
पारम्यं श्रीनिवासस्य पश्यन्त्यत्र मुमुक्षवः।
अनादिमायासञ्छन्नकौतस्कुतजिगीषया ॥

* * * *

भेदो विकल्पात्कस्तर्हि विशेषणविशेष्ययोः।
यदि स्वरूपग्रहणं तदसारं हि तार्किकम् ॥
समवायस्याग्रहणं निर्विकल्पविकल्पयोः।
भेदे पश्य मृषावादिन् . . . . . तम् ॥

---

(*k*) अभेदखण्डनम्.

ABHĒDAKHAṆḌANAM.

Foll. 50*a*—55*a*. Foll 55*b* and 56 are left blank.

A refutation of the leading principle of the Advaita school of the Vēdānta that the individual self is identical with the Supreme Brahman.

Complete.

**Beginning:**

अत्र खलु कश्चिच्चिरन्तनसरस्वनीसीमन्तोदन्तानभिज्ञं भेदमहं खण्डयामीति जल्पति। तं प्रति पृच्छामः—किं करोषि वृथा जल्पं भेदमहं खण्डयामीति ?। तदिदं भेदखण्डनं स्वाशिरःखण्डनं च(न)जानीषे। कुतस्त-

दिति चेत् भेदमहं खण्डयामीति खण्डनीयस्य खण्डयितृशिरसश्च भेदाभावेन भेदखण्डनस्य स्वाशिरःखण्डनत्वापातात् ।

* * * *

अतो भेदो धर्म इति पक्षोऽपि साधीयान् । अतस्सर्वथा भेदो न दुर्निरूपः । अपि च भेदस्य दुर्निरूपत्वे त्व(दुक्त)स्याभेदस्यापि दुर्निरूपत्वं प्रसज्येत । अभेदेऽपि त्वदुक्तसकलदोषानतिवृत्तेः । अभेदः किं स्वरूपः उत धर्मः ? । न तावत्स्वरूपत्वं सम्भवति ; ब्रह्मेति स्वरूपव्यवहारवत् प्रतियोगिनिरपेक्षाभेदव्यवहारप्रसङ्गात् ।

**End:**

तदुक्तं वरदाचार्यैः—

न द्वैतं प्रतिपादयन्त्युपानिषद्वाचः प्रसिद्धं हि तत्
किं त्वद्वैतमनन्यगोचरतया तद्वेद य . . . !
अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थप्रयासो यतः
प्रख्याता च परस्तु शास्त्रविषयो भेदस्तदद्वैतवत् ॥

इति सर्वमवदातम् ॥

**Colophon:**

इत्यभेदखण्डनम् ॥

---

R. No. **1365.**

Paper. $11\frac{3}{8} \times 8\frac{3}{4}$ inches. Foll. 455. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Tiru. Śrīnivāsavarada Tātācārya of Villiyambākkam. Bound in two volumes.

**शाब्दिकाचिन्तामणिः.**

ŚĀBDIKACINTĀMAṆIḤ.

By Gōpālākṛṣṇa Śāstrin, son of Vaidyanāthasumati of Śrīvatsa family and pupil of Rāmabhadrādhvarin. Same work as that described under R. No. 143 *ante*.

Contains from the second Āhnika to seventh Āhnika of the first Pāda of the first Adhyāya.

**Beginning :**

अथाक्षरसमाम्नायसूत्राणां कृत्स्नशास्त्रोपोद्घातरूपत्वात् तद्विचारः प्रथममारभ्यते । यद्यपि पूर्वस्मिन्नाह्निके अथ किमर्थो वर्णानामुपदेश इत्यादिना वर्णविषयविचारः कृतः, तथापि तत्र सामान्येन वर्णविषयविचारः कृतः । अस्मिन्नाह्निके ककारादिवर्णविषयो विचारः क्रियत इति न पौनरुक्त्यम् । अइउण् । अत्रत्यणकारानुबन्धः आदिरन्त्येनेति संज्ञार्थमकारमात्रेण संबध्यते ।

* * * *

**Colophon :**

इति श्रीवत्सकुलतिलकवैद्यनाथसुमतिसूनोः वैयाकरणाचार्यसार्वभौमश्रीरामभद्राध्वरिगुरुचरणश्लाघितमतिकौशलस्य गोपालकृष्णशास्त्रिणः कृतौ शाब्दिकचिन्तामणौ प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

**End :**

इह नानेकाल् शिदिति पठित्वान्त्यस्यादेरिति चानुवर्त्यानुसंहारद्वयनिषेधात् सर्वग्रहणं शक्यमकर्तुमित्याहुः ॥

**Colophon :**

इति श्रीवत्सकुलतिलकवैद्यनाथसुमतिसूनोः वैयाकरणाचार्यसार्वभौमश्रीरामभद्राध्वरिगुरुचरणश्लाघितमतिकौशलस्य श्रीगोपालकृष्णशास्त्रिणः कृतौ शाब्दिकचिन्तामणौ प्रथमस्याध्यायस्य प्रथमे पादे सप्तममाह्निकं संपूर्णम् ॥

---

R. No. **1366.**

Paper. $11\frac{1}{2} \times 9$ inches. Foll. 247. Lines, 20 in a page. Grantha and Tamil. Good.

Transcribed in 1914–15 from a MS of M.R.Ry Tirumalai Kuḻappalūr Anantayyavādhyār.

## जिनसंहितासंग्रहः—द्राविडटीकासहितः.
## JINASAMHITĀSAṄGRAHAḤ WITH TAMIL MEANING.

Deals with the conduct of worship in Jaina temples and other incidental things connected therewith. The subjects dealt with are clear from the headings of the Paricchēdas.

By Ēkasandhibhaṭṭāraka. Contains Paricchēdas 1 to 20 as given below :—

१. शास्त्रमुखम्.
२. शास्त्रोपक्रमवर्णनम्.
३. पूजकलक्षणम्.
४. जातिनिर्णयः.
५. शौचाविधिः.
६. प्रतिष्ठाविधिः.
७. होमविधिः.
८. नित्यसंध्याक्रियाविधिः.
९. वेदार्चनक्रमविधिः.
१०. स्नपनाविधिः.
११. कलशस्थापनविधिः
१२. स्नपनकालविधिः.
१३. बलिविधानम्.
१४. कार्त्तिकदीपार्चनविधिः.
१५. श्रीविहारविधिः.
१६. ध्वजारोहणाविधिः.
१७. अङ्कुरार्पणविधिः.
१८. प्रायश्चित्तविधिः.
१९. जीर्णोद्धारणविधिः.
२०. मन्त्रविधिः.

Complete.

**Beginning :**

विज्ञानं विमलं यस्य विशदं विश्वगोचरम् ।
नमस्तस्मै जिनेन्द्राय सुरेन्द्राभ्यर्चिताङ्घ्रये ॥

*    *    *    *

वन्दित्वा च गणाधीशं श्रुतस्कन्धमुपास्य च ।
संग्रहीष्यामि मन्दानां बोधाय जिनसंहिताम् ॥

*    *    *

इत्यनुश्रूयते वीरः पुरा लोकत्रयीगुरुः ।
विपुलाद्रौ सभां दिव्यामध्युवास कदाचन ॥

*    *    *

तत्रासीनं तमभ्येत्य मगधेन्द्रः कृताञ्जलिः ।
त्रिः परीत्याभिसंपूज्य स्तुत्वा नत्वा च पूरुषम् ॥

* * * *

**Colophon:**

इत्यार्षे भगवदेकसन्धिभट्टारकप्रणीते महाशास्त्रे जिनसंहितासंग्रहे शास्त्रमुखं नाम प्रथमः परिच्छेदः ॥

**End:**

इति परमजिनेन्द्रं पूजयत्युक्तमन्त्रैर्य इह परमभक्त्या पूजितं लोकनाथैः ।
विधुतनिखिलबन्धं स स्वरूपं प्रयाता जननमरणदूरं ध्वस्तरोगादिदुःखम् ॥

* * * *

**Colophon:**

इत्यार्षे भगवदेकसान्धिभट्टारकप्रणीते महाशास्त्रे जिनसंहितासंग्रहे मन्त्रविधिर्नाम विंशः परिच्छेदः ॥

---

## R. No. 1367.

Paper. $11\frac{1}{2} \times 8\frac{7}{8}$ inches. Foll. 16. Lines, 27 in a page. Telugu. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. D. V. Prakāśa Rao, B.A., of Cocanada.

Fol. 27*b* is left blank.

### विजयविक्रमव्यायोगः.

### VIJAYAVIKRAMAVYĀYŌGAḤ.

This work represents one of the ten varieties of dramatic composition and is technically known as Vyāyōga. The plot of this drama is the story of the killing of Jayadratha by Arjuna in revenge for the former having been instrumental in killing the latter's son in battle. By Āryasūrya.

Complete.

The original manuscript is said to have been copied by Lakṣmīnārāyaṇa, son of Kandarpa Sītārāma Śāstri, the copying having been completed on Wednesday, the 8th day of the dark fortnight of the Śrāvaṇa month in the year Krōdhi.

**Beginning :**

श्रेयस्तनोतु स महाहवनित्यपुष्ण(ष्ट):
कृष्णाश्चिराय जगतः प्रथितार्तिहारी ।
यः सिन्धुराजमथनं प्रविधाय दर्पा-
ल्लक्ष्मीं प्रसह्य मिषतां द्विषतामवाप ॥

* * * *

अलमतिप्रसङ्गेन । आदिष्टोऽस्मि परिषदा—

अस्ति प्रशस्तगुणशालिनि कुण्डिनानां
गोत्रे पवित्रचरितः कविरार्यसूर्यः ।
यस्य स्खलत्पदवतीमपि सूरयोऽमी
वाचं शिशोरिव रसादुपलालयन्ति ॥

तस्य कृतिर्विजयविक्रमो नाम वीररसप्रायो व्यायोगोऽभिनेतव्य इति ।

* * * *

(ततः प्रविशति युद्धसंनद्धः सकृष्णः ससुहृज्जनोऽर्जुनः ।) रथी—सखे यदुनन्दन.

वीराभिरक्षितममुं जगदेकवीरं हन्तुं जयद्रथमहं विहितप्रतिज्ञः ।
तत्सज्जयाद्य विजयाय रणं प्रयातुं जैत्रं द्विषां मम रथं च मनोरथं च ॥

**End :**

रथी—किमतः परं प्रियमस्ति । तथाप्येतद्भवतु ।

अविहतविभवं कवीश्वराणां स्फुरतु यशश्चिरमिन्दुकुन्दगौरम् ।
हरिहरचरणेषु भक्तियुक्तो भवतु जनो भुवि भुक्तिमुक्तिसिद्धः ॥

(इति निष्क्रान्ताः सर्वे) ॥

**Colophon :**

इति श्रीमदार्यसूर्यकविना विरचितो विजयविक्रमो नाम व्यायोगः ॥

R. No. **1368.**

Paper. 11 × 8½ inches. Foll. 59. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Rājagurukkaḷ of Rāmeśvaram.

शैवोत्सवविधिः.

ŚAIVŌTSAVAVIDHIḤ.

Similar to the work described under No. 5533 of the D.C.S. MSS., Vol. XI.

Incomplete.

**Beginning:**

आदौ आचार्य उत्सवात् पूर्वदिवसे क्षौरकर्म समाप्य . . . . . . . . . . . . . . . . . स्नात्वा शुद्धवस्त्रोत्तरीय-विभूतिरुद्राक्षं सन्धार्य विधिवत् भस्मधारणं . . . . . . . . . . . . . दिकं समाप्य भूतशुद्धिशोषणदाहनप्लावनान्तं त्रिर्मातृकाबहिर्मातृक . . . . . . . . . . . . . पश्चात् शिवागमोक्तप्रकारेण मन्त्रन्यासादिषडध्वान्यासं

* * * *

अथ प्रार्थयेत्—

स्कन्दाग्रज गणाधीश देव्या वल्लभया सह ।
शिवयागं प्रवृत्तोऽस्मि निर्विघ्नं त्वं प्रसीद मे ॥

एवं संप्रार्थ्य पुण्याहं वाचयित्वा पुष्पाञ्जलिं दत्वा अथ गर्भगृहं प्रविश्य मूललिङ्गस्य गन्धपुष्पधूपदीपनैवेद्यताम्बूलनीराजनं दत्वा प्रार्थयेत् ।

**End:**

तत्तच्छिरःप्रदेशेषु तत्तत्कुम्भं निविन्यसेत् ।
मध्यमे शिवकुम्भं तु उत्तरे वर्धनीं तथा ॥

तन्मध्ये स्कन्दमभ्यर्च्य विघ्नेशान् परितः क्रमात् ।
पूर्वादीशानपर्यन्तं लोकपालान् घटे न्यसेत् ॥
सद्योजातेन मन्त्रेण आवाहनं प्रकल्पयेत् ।
वामदेवेन संस्था.

---

R. No. **1369.**

Paper. 11 × 8¾ inches. Foll. 32. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a paper MS. of M.R.Ry. S. Narasiṁha Rāmānujācārya of Villiyambākkam.

(*a*) उपसर्गद्योतकताविचारः.

UPASARGADYŌTAKATĀVICĀRAḤ.

Foll. 1*a*—3*b*.

A discussion as to the significance and force of Upasargas. The author Paṭṭabhirāma tries to maintain that an Upasarga has no independent force of its own, but that it adds force and significance to the following expression.

Seems complete.

**Beginning:**

उपकुम्भमित्यत्र पूर्वपदार्थप्रधानः समासः । उपपदार्थसमीपस्यैव विशेष्यतया बोधात् । ननु उपशब्दस्य कथं समीपवाचकत्वम्? उपशब्दस्य प्रादिमध्ये पठितत्वेन उपसर्गत्वात् । उपसर्गाणां वाचकताया नैयायिकसिद्धान्तविरुद्धत्वात् । अत्रोच्यते—उपसर्गाः क्रियायोगे इति प्रादीनां क्रियायोग एव उपसर्गसंज्ञाविधानात् नात्रोपसर्गत्वम्; अतो वाचकत्वं सम्भवत्येव ।

**End:**

इत्थं चोपोदे(पाद)योऽपि यथोक्तक्रियायोगवन्तो द्योतका एव न वाचकाः । यथोक्तक्रियायोगशून्यास्तु न वाचका इति ध्येयम् ॥

**Colophon:**

इति पट्टाभिरामविरचित उपसर्गद्योतक(ता)विचारस्समाप्तः ॥

(*b*) कर्मधारयविचारः.

KARMADHĀRAYAVICĀRAḤ.

Foll. 3*b*—4*b*.

An investigation of the nature, use, etc., of the Karmadhāraya or epithetic compound : by Paṭṭābhirāma.

Complete.

**Beginning :**

शक्त्या अभेदान्वय्युपस्थापकः कर्मधारय इति वृत्तिः । स्वघटकशक्तिप्रयोज्याभेदान्वयबोधजनकसमासत्वं कर्मधारयत्वमित्यर्थः । तथा च राजपुरुष इत्यत्र राजसम्बन्धी पुरुषः इति वा राज्ञः पुरुष इति वा विग्रहवाक्ये राजसम्बन्धिपुरुषयोरभेदान्वयबोधेऽपि न तादृशस्य कर्मधारयत्वापत्तिः ।

**End :**

प्रयोज्यत्वं च प्रातीतिकस्वरूपसम्बन्धविशेषः । स्वप्रयोज्या या स्वजन्यान्वयबोधप्रयोजकता, तच्छून्यलक्षणासामान्यकत्वे सति समासत्वं कर्मधारयत्वमिति निष्कर्षः इति संक्षेपः ॥

**Colophon :**

इति पट्टाभिरामकृतकर्मधारयविचारः समाप्तः ॥

---

(*c*) तत्त्वचिन्तामणिदीधितिप्रकाशिका.

TATTVACINTĀMAṆIDĪDHITIPRAKĀŚIKĀ.

Foll. 5*a*—32*a*. Fol. 32*b* is left blank.

Transcribed in 1914-15 from a palm-leaf MS. of M.R.Ry. S. Gōpālācāryā of Villiyambākkam.

By Gadādharabhaṭṭācārya. Same work as that described under No. 4041 of the D.C.S. MSS., Vol. VIII.

Contains the Sāmānyābhāvāvyavasthāpana only.

R. No. **1370.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 42. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Vādhyār Svāmi of Mannargudi.

श्रीवैष्णवसदाचारसिद्धान्तनिर्णयः.

ŚRĪVAIṢṆAVASADĀCĀRASIDDHĀNTANIRṆAYAḤ.

A treatise containing certain rules of conduct for the guidance of Śrī-Vaiṣṇavas. It is said to have been based upon the works of Rāmānujabhaṭṭārya, Nigamāntaguru and Nārāyaṇaguru, and upon Smṛtiratnākara, Saccaritrasudhānidhi. By Śrīraṅganātha Sannyāsin of the Mutt at Ahōbila and a disciple of Śrīnivāsayati.

Complete.

**Beginning :**

यस्याभवद्भक्तजनार्तिहन्तुः पितृत्वमन्येष्वविचार्य तूर्णम् ।
स्तम्भेऽवतारस्तमनन्यलभ्यं लक्ष्मीनृसिंहं शरणं प्रपद्ये ॥
श्रीवीरराघवयतीन्द्रपराङ्कुशादिरामानुजार्यकमलानिधियोगिवर्यैः ।
संप्रेक्षितं करुणया परिपूर्णबोधं श्रीरङ्गनाथयतिशेखरमाश्रयामः ॥
लक्ष्मीनृसिंह तव पादसरोजयुग्मे ब्रह्मेन्द्ररुद्रमुनिबृन्दशिरोऽभिवन्द्ये ।
श्रीमच्छठारियतिराजसुपूजिते च शुद्धं मदीयहृदयं दृढमस्तु लग्नम् ॥
श्रीरामानुजसिद्धान्तनिर्धारणधुरंधरः ।
श्रीनिवासयतीन्द्रो मे संनिधत्तां सदा हृदि ॥
श्रीरामानुजभट्टार्यवागीशानां शुभाः कृतीः ।
निगमान्तगुरोः श्रीमन्नारायणगुरोरपि ॥
स्मृतिरत्नाकरं चैव सच्चरित्रसुधानिधिम् ।
संवीक्ष्य तेभ्यः संगृह्य सारानर्थान् सतां मुदे ॥
श्रीरङ्गनाथयमिना प्रमाणपथवर्तिना ।
श्रीवैष्णवसदाचारसिद्धान्तोऽयं निबध्यते ॥

ब्राह्मे मुहूर्ते उत्थाय हरिर्हरिरिति सप्तकृत्व उच्चार्य—

ग्राहग्रस्ते गजेन्द्रे रुवति सरभसं तार्क्ष्यमारुह्य धावन्
व्याघूर्णन्माल्यभूषावसनपरिकरो मेघगम्भीरघोषः ।
आबिभ्राणो रथाङ्गं शरमसिमभयं शङ्खचापौ सखेटौ
हस्तैः कौमोदकीमप्यवतु हरिरसावंहसां संहतेर्नः ॥

* * * *

इति गुरुपरम्परानुसंधानपूर्वकं भगवन्तं प्रपद्य भगवच्छास्त्र-तदुपबृंहणनित्यगद्यस्तोत्रादिषु विप्रकीर्णोक्तं ध्यानं यथावगमनं समाहृत्यानुतिष्ठेत् ।

**End:**

उक्तेषु धर्मेषु प्रमाणानि निषिद्धानुष्ठाने प्रत्यवायः तत्प्रायश्चित्तानि तेषु प्रमाणानि च रत्नाकरादिषु द्रष्टव्यानि ॥

अहोबिलस्थलाधीशलक्ष्मीनृहरिशासनात् ।
श्रीरङ्गनाथयमिना निर्णयोऽयं निबध्यते ॥
श्रीरामानुजसिद्धान्तनिर्धारणपटीयसे ।
श्रीनिवासयतीन्द्राय नमोऽस्तु गुरवे सदा ॥

**Colophon:**

इति श्रीरङ्गनाथयमिकृतः श्रीवैष्णवसदाचारसिद्धान्तनिर्णयः ॥

---

## R. No. **1371.**

Paper. 11 × 8½ inches. Foll. 53. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. M. A. Tiruvēṅkaṭācārya of Dāmal.

सद्विद्याकल्पतरुः.

SADVIDYĀKALPATARUḤ.

This work lays down with authoritative quotations from various Smṛti works, the daily duties of the Prapannas. It is presumably intended for Teṅgalai Śrī-Vaiṣṇavas. By Vādikēsari Ramyajāmātṛmuni, also called Aḻagiyamaṇavāḷa Jīyar of Kāñci (Conjeeveram).

Complete.

**Beginning:**

यत्स्मृतिः सर्वसिद्धीनामन्तरायनिवारिणी ।
तमहं सर्ववेदान्तसारं नारायणं भजे ॥
पुराणसंहितावाक्यैश्शिष्टाचारानुसारतः ।
ग्रथितं स्मृतिवाक्यैश्च प्रपन्नाह्निकमुत्तमम् ॥
श्रीकाञ्चीरम्यजामातृमुनिभिस्तत्त्ववित्तमैः ।
प्रपन्नाचारशिष्टार्थं गृह्यतां तद्बुभुत्सुभिः ॥

शाण्डिल्यस्मृतौ—

निवृत्तं वैदिकं कर्म यत्प्रोक्तं भवभेषजम् ।
इत्युपक्रम्य
महाविस्तररूपोऽयमाचारः पञ्चकालिनाम् ।
संक्षेपात्प्रब्रवीम्यद्य यथाशास्त्रं यथामति ॥

इत्यन्तं तत्स्वरूपमुक्तम्—

* * * *

प्रातः सूर्योदयात्पूर्वं घटिकात्रयमात्रके ।
प्रपन्नः प्राङ्मुखोत्थाय हरिर्हरिरिति ब्रुवन् ॥
प्रक्षाल्य करपादं च गण्डूषाचमने चरेत् ।
समासीनः शुचौ देशे कार्यं गुर्वादिकीर्तनम् ॥

**End:**

ऋतुस्नातां सतीं भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥

अनन्यशरणां भार्यां यौवने यः परित्यजेत् ।
सप्तजन्म भवेत्स्त्रीत्वं वैधव्यं च पुनः पुनः ॥

**Colophon:**

इति श्रीकाञ्चीवादिकेसरिरम्यजामातृमुनिविरचितः सद्विद्याकल्पतरुनामकः आह्निकग्रन्थः समाप्तः ।

The name of the copyist and the date of transcription are given thus:

श्रीशैलानन्तपुरुषवंशजेन व्यलेख्यदः ।
श्रीरङ्गसूरिणा रम्यजामात्राह्निकमुत्तमम् ॥

शालिवाहनशके १७९५ वर्षे आङ्गिरसनामके वृश्चिकमासे १५ दिवसे विलिख्य परिसमापितोऽयं ग्रन्थः ॥

---

R. No. **1372.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 20. Lines, 20 in a page. Dēvanāgarī and Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Śrīnivāsapāṭrācārya of Kumbakonam.

**कार्पण्यदर्पणम्.**

KĀRPAṆYADARPAṆAM.

An investigation into the nature of the feature called Kārpaṇya, which is said to be indispensable to Prapatti, and whether this feature should be possessed by a Guru or by his disciple, etc: by (Eḻayavilli) Śaṭhakōpācārya, disciple of Bāladhanvi Vēdāntācārya and Gōpāladēśika.

Complete.

**Beginning:**

गोपालदेशिकं वन्दे सुधीशं करुणानिधिम् ।
निक्षेपविद्या यन्मूर्त्या संधानमगमद्भुवि ॥

अत्यन्ताकिंचनं मामनितरगतिकं दासमावेद्य देवे
श्रीशे श्रीशार्ङ्गपाणौ निरुपधिकृपया मद्भरं स्वं समर्प्य ।
मा भीः कैंकर्यवर्गेष्वधिकुरु समयेष्वित्यमुं योनृ(ऽन्व)गृह्णात्
सोऽयं श्रीबालधन्व्यागममुकुटगुरुः पातु मां धीसमृद्ध्यै ॥

श्रीबालधन्व्यागममौलिसूरेः पदाब्जयुग्मं प्रणिपत्य मूर्ध्ना ।
कार्पण्यवाक्येषु तदुक्तमर्थं तुष्ट्यै सतामद्य लिखामि पत्रे ॥

कार्पण्यवाचो विवरीतुकामः श्रीबालधन्व्यागममौलिसूरिः ।
पात्रीकरिष्यन्कृपयैतमर्थमपाठयन्मां शुकवद्वदान्यः ॥

पुराणवाणीशिखरार्य एष रहस्यवाणीविवृतौ हि शक्तः ।
तद्व्याकृतौ साहसवृत्ति(वर्ति)नो मे दधातु मेधां सि (च) सरस्वतीं च ॥

अत्रानुकूल्यसंकल्पप्रातिकूल्यवर्जनकार्पण्यमहाविश्वासगोप्तृत्ववरणरूपावश्यकर्तव्याङ्गपञ्चकसहितं स्वरूपफलसमर्पणगर्भं भरसमर्पणमिति भगवच्छास्त्रादिषु तत्र तत्र प्रतिपादितमिति श्रीमद्वेदान्तदेशिकदिव्यसूक्तिषु श्रीमद्रहस्यत्रयसारादिषु निष्कृष्टं वर्तत इति श्रीमत्साक्षात्स्वामिभिः श्रीमद्गोपालदेशिकैश्चास्मदाचार्यैः न्यासविद्यादर्पणसारास्वादिनीनिक्षेपचिन्तामणिप्रभृतिषु श्रीसूक्तिषु बहुशोऽनुगृहीतम् । सैव प्रपत्तिः । सा च स्वनिष्ठा उक्तिनिष्ठा आचार्यनिष्ठेति त्रिधेति च प्रत्यपादि । तत्र चतुर्ष्वङ्गेषु न विवादः । कार्पण्यरूपाङ्गमात्रे शोधनीयं किंचिदस्ति । कार्पण्यस्वरूपं तु परिकरविभागाधिकारोक्तरीत्या निक्षेपचिन्तामणावस्मदाचार्यपादैः सम्यङ् निदर्शितम् ॥

**End:**

तस्मात्पुत्रशिष्यादीन् प्रति आचार्यनिष्ठाया मोक्षार्थप्रपत्त्यनुष्ठानकालेऽङ्गानुष्ठानकाले पुत्रशिष्यादिगताकिञ्चन्यादिनिवेदनात्मकमेव कार्पण्यरूपाङ्गमनुष्ठेयमिति सिद्धमिति वर्णयामासुः ॥

श्रीबालधन्विनिगमान्तगुरूक्तिदार्व्या-
द्वेदान्तदेशिकमुखोक्तनिबन्धनानाम् ।
वाक्यैर्मया न्यसनमुख्यशरीरभूत-
कार्पण्यमद्य विवृतं भुवि सन्मुदेऽत्र ॥

इत्थं प्रमाणयुक्तिभ्यां शोधितं शठवैरिणा ।
कार्पण्यदर्पणं भाव्यं भुवि निक्षेपदर्शने ॥

श्रीबालधन्विवेदान्तगुरुर्गोपालदेशिकः ।
संतुष्येतां मदुक्त्याद्य शुकोक्त्येव नराधिपः ॥

जीयाच्छ्रीबालधन्व्यागममुकुटगुरुर्देशिकेन्द्रो दयालु-
र्जीयाद्गोपालसूरिर्बुधजनसदसां दत्तनिक्षेपविद्यः ।
जीयाद्वेदान्तरामानुजमुनिरनघज्ञानवैराग्यपूर्णो
जीयादाकल्पमस्मत्कुलगुरुरिह चामुत्र वेदान्तसूरिः ॥

* * * *

**Colophon:**

श्रीशठकोपाचार्यविरचितं कार्पण्यदर्पणं समाप्तिमगमत् ॥

---

R. No. **1373.**

Paper. $11\frac{3}{8} \times 8\frac{3}{4}$ inches. Foll. 81. Lines, 20 in a page. Dēvanāgari. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Śivasubrahmaṇya Śāstri, Indian Institute, Bangalore.

भाट्टदीपिकाव्याख्या—प्रभावली.

BHĀṬṬADĪPIKĀVYĀKHYĀ : PRABHĀVALĪ.

By Śambhubhaṭṭa. Same work as that described under R. No. 859 *ante*.

Contains the eleventh Adhyāya complete.

**Beginning:**

अथ श्रीशम्भुभट्टविरचितायां भाट्टदीपिकाव्याख्यायां प्रभावल्यभिख्यायामेकादशाध्यायस्य प्रथमः पादः प्रारभ्यते—

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकम् ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥
यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः ।
सदाशिवाराधनशुद्धचित्तः तं बालकृष्णं पितरं नमामि ॥
श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥
शिष्येणात्र गुरोः कृतावपि मया व्युद्भाव्यते काचना-
सम्भूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किं तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्वियं मे मतिः ॥

प्रयोजनाभिसम्बन्धात्पृथक् सतां ततस्स्यात् ऐककर्म्यमेकशब्दाभिसंयोगात् । अत्र वार्त्तिककृता दशमे बाधाभ्युच्चयलक्षणं वृत्तमिति भाष्योक्तौ अभ्युच्चयस्य शास्त्रार्थत्वाभावेन अध्यायार्थत्वानुपपत्तिं बाधाभावस्यैव अभ्युच्चयत्वात् निरूपणीयत्वसम्भवेन ।

**End:**

तन्त्रन्यायाप्रवृत्तौ अर्थसिद्धाया एव आवृत्तेरिह अपवादत्वेनानिरूपणात् नाध्यायार्थत्वमिति अभिप्रेत्य निरूपितमध्यायार्थमुपसंहरति—तदेवमिति ॥

**Colophon:**

इति श्रीपूर्वोत्तरमीमांसापारावारीर(ण)धुरीणश्रीखण्डदेवान्तेवासिकविमण्डनश्रीशम्भुभट्टविरचितायां भाट्टदीपिकाव्याख्यायां प्रभावल्यभिख्यायामेकादशस्याध्यायस्य चतुर्थः पादः । अध्यायश्च समाप्तः ॥

## R. No. 1374.

Paper. 11 × 8⅝ inches. Foll. 18. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. S. Gōpālācāriyar of Villiyambākkam.

### आशौचसामान्यनिरुक्तिः

### ĀŚAUCASĀMĀNYANIRUKTIḤ

An investigation into what constitutes Āśauca (pollution) consequent on the birth or death of a relation: by Vēṅkaṭavīrarāghavācārya.

Complete

**Beginning :**

जननाद्यन्यतरजन्यत्वे सति स्वज्ञानाधीनकर्मानुष्ठाननिवर्त्यत्वे सति अतिशयत्वमित्याशौचसामान्यलक्षणम् । प्रथमसत्यन्तमात्रोक्तौ दुःखविषादयोरतिव्याप्तिः । अतः द्वितीयसत्यन्तम् । तावन्मात्रोक्तौ स्वज्ञानाधीनप्रायश्चित्तापनोद्यपापान्तरस्यापि प्रायश्चित्तद्वारा स्वज्ञाननिवर्त्यत्वात् कलञ्जभक्षणादिजन्यपापान्तरे अतिव्याप्तिः । अतः प्रथमसत्यन्तम् ।

**End :**

आशौचसंपातस्य ज्ञानरूपताया महता संरम्भेण धर्माब्धिसारकृता सिद्धान्तितत्वात् ज्ञातमेवाशौचसामान्यं जपस्वाध्यायादिपर्युदासकं न तु स्वरूपसदिति युक्तः पन्थाः ॥

इत्थमाशौचसामान्यनिरुक्तिर्बुधसंमता ।
व्याकृता वेङ्कटोदञ्चद्वीरराघवधीमता ॥

**Colophon :**

इति वेङ्कटवीरराघवाचार्यस्य कृतिषु आशौचसामान्यनिरुक्तिः समाप्ता ॥

R. No. **1375.**

Paper. 11×8¾ inches. Foll. 79. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from the palm-leaf MS. of M.R.Ry. Tiru. Śrīnivāsavarada Tātācārya of Villiyambākkam.

वादकुतूहलम्.

VĀDAKUTŪHALAM.

This work embodies the controversy that took place in the court of King Mallikārjunapati or Mallarāja between Svāmi Śāstri and Bhāskararāya regarding the meaning of certain expressions, such as Paśu, Sōma, etc., occurring in Vedic texts constituting scriptural commandments.

Incomplete.

**Beginning:**

प्रह्लादाभीष्टदाने विबुधसमुदयस्तूयमानापदाने
शेषक्षोणीभृदन्तःप्रबिलगतपदाहोबिलक्षेत्रगर्भात् ।
प्रादुर्भूते हिरण्यद्विरदमतिमदस्वान्ततन्त्रं निहन्तुं
धीरे सच्छास्त्रयोनौ मम भुवनगुरावस्तु भक्तिर्नृसिंहे ॥

कल्पक्षोणिरुहाश्च कल्पलतिकाश्चिन्तामणिः कामधुक्
सर्वे संमिलिता यदीयकलनां नैवाधिरोढुं क्षमाः ।
ते यातास्तत एव लाघववशान्मौस्सं(दूर्ध्वं)दिवं गौरवात्
एष क्षोणिपतिस्ततो भुवामिति स्पष्टे घ(ध)टे धीमताम् ॥

मल्लिकार्जुनमहीमहेश्वरो दानवारिनिवहोल्लसत्करः ।
सार्वभौम इति कुम्भितामगात् कुम्भिनी कथमियं भवेन्न भूः ॥

मल्लक्षोणिभुजो मितिं च समितिं तस्यामसङ्ख्यावतः
सङ्ख्यावन्निवहान् वनीपकगुणान् वीक्ष्यावनीपानपि ।

राज्यं वश्यमवश्यमप्रातितरां रुद्धान् विरुद्धान्नृपान्
आलोलोक्य च सस्मिता अभिजनास्सर्वे भृशं विस्मिताः ॥

विद्वद्वल्लभमल्लिकार्जुनमहीपालं तदीयामलं-
कुर्वाणं समितिं निजं गुरुसुतं द्रष्टुं चिरादागते ।
श्रीमद्भास्कररायनामनि बुधे राज्ञा सुविज्ञापिते
कुर्वाते कुतुकेन कामपि कथां तौ स्पर्धमानाविव ॥

श्रीनृसिंहगुरुणा . . . स्वामिशास्त्रिबुधभास्कररायौ ।
यां कथां रचयतः कृतिनस्तां दोषदृष्टिविधुराः कलयन्तु ॥

मिथः प्रसङ्गरूपत्वात् प्रसङ्गानुप्रसङ्गतः ।
अत्र प्रदर्शयिष्यावः स्वस्वोपस्थितिकल्पनाः ॥

आप्राचः कामरूपा द्रुहिणसुतनदप्लाविताद्राप्रतीचो
गात्वाराक्षिन्धुसान्द्राद्रघुवरचरितादा च सेतोरवाचः । (?)
आकेदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजाः
ये ये तानेष यत्नस्सुखयतु समजं कश्चमत्कर्तुमीष्टे ॥

तत्रेयं मध्यस्थैः प्रदर्शिता विप्रतिपत्तिः—

पशुना यजेत सोमेन यजेतेत्यादिके विशिष्टविधौ पशुसोमादिपदानां मत्वर्थे लक्षणास्ति न वेति । अत्र विधिकोटिः शास्त्रिणां निषेधकोटिस्तु रायाणाम् । तत्रायं समयबन्धः—तत्र सिद्धान्तवादिनैषा साध्या मत्वर्थ-लक्षणा उपपदे प्रतिवादिना तु धर्माद्यविरोधेनैव सा दूष्या । एवं बद्धे समये वादिनोऽयं पत्रिकामुखेनोपन्यासः ।

**End :**

एवञ्च प्रकृतेऽपि कारणत्वघटितसम्बन्धेन सोमवत्यामेव भावनायां तेन सम्बन्धेन सोमप्रकारकप्रथमबोधस्य भ्रमत्वाभावेन विधिवाक्यस्य प्रामाण्योपपत्तेः प्रथमबुद्धसोमकरणकत्वनिर्वाहकद्वैतीयीकबोधस्य न शाब्द-

त्वम् । अत एव वामेण बाणेन ममार वाली, हस्तेन कुठारेण दारुं छिनत्ति.

---

R. No. **1376.**

Paper. 11⅓ × 8½ inches. Foll. 81. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–1915 from the palm-leaf MS. of M.R.Ry. Tiru. Śrīnivāsavarada Tātācārya of Villiyambākkam.

**विधिरत्नावली.**

VIDHIRATNĀVALĪ.

An unfavourable criticism of the Vidhidarpaṇa of Kollūr Nārāyaṇa Śāstri by means of certain reasonings and arguments explained by Appayadīkṣita in his work entitled Vidhirasāyana. By Śrīnivāsadāsa, son of Nṛsiṁhārya and disciple of his paternal uncle Vādhūla Lakṣmaṇārya of Tirumaḻiśai village.

Incomplete.

**Beginning:**

यस्याभूद्भुवने जगज्जनिभुवस्स्तम्भस्स्वयं जन्मभूः
यस्यासीन्नरसिंहयोरघटितं रूपं वपुस्तादृशम् ।
यस्यासन्नखराणि तस्य विजये शस्त्राणि रक्षोविभोः
तं देवं मदभीष्टदैवतमहं वन्दे सदाभीष्टदम् ॥
सूक्तिर्यस्य कथाजयोत्सुकजुषां वादाङ्गणान्तर्जुषां
वादारम्भजुषां विचारकलनावाचालभावं जुषाम् ।
दुर्वादिद्विपदुष्टचेष्टितदुरुत्पाटोद्भटानां त्रयी-
सिद्धान्तार्थविशेषसिद्धिविदुषां सिद्धद्रुशाखायते ॥
अस्मदार्यसुधाधामा लक्ष्मणार्यगुरूत्तमः ।
कल्याणगुणभूमासौ कारुण्यं मयि कल्पताम् ॥
विधिरसायनविस्तृतयुक्तिभिः विविधतर्कविकर्कशवर्त्मभिः ।
त्रिविधलक्षणलक्ष्यविधास्वसौ वितनुते विधिदर्पणदूषणम् ॥

विधिरत्नावली सेयं विबुधानन्ददायिनी ।
सुखोपजीविनीकण्ठे भासतां भावुकार्पिता ॥
भूसारपुरवाधूलवंशवारिधिसम्भवः ।
श्रीनिवासोऽधुनानन्दं कर्तुमारभते सताम् ॥

इह किल भगवान् परमकारुणिको जैमिनिः सुगतमुखकुमतिकृत-कुकृतिशतदोषदूषितानखिलानपि वेदान् व्याचिकीर्षुः तदर्थविचारात्मकं कर्ममीमांसाख्यं शास्त्रमवतारयामास ।

* * * *

**Colophon:**

इति श्रीभूसारपुरवास्तव्यवाधूलकुलतिलकश्रीलक्ष्मणार्यगुरुचरणनलिनसमधिगतसकलविद्याविशारदस्य तदनन्यदैवतस्य तल्लब्धात्मतत्त्वयाथात्म्यस्य तदनुजश्रीनृसिंहार्यसूर्य(रि)सूनोः श्रीनिवासदासस्य कृतौ विधिरत्नावल्यामुदाहरणनिरासः संपूर्णः ॥

**End:**

श्रुतेर्लिङ्गप्राप्तानुवादत्वमेवाभ्युपगतं न परिसंख्याविधित्वामिति गर्दभरशनाग्रहणे लिङ्गप्राप्तमन्त्रसम्बन्धनिवृत्तये स्वार्थत्यागादिकमवश्याश्रयणीयम् ॥

**Colophon:**

इति विधिरत्नावल्यां त्रैदोष्यव्यवस्थाभङ्गः ॥

व्रीहीन् प्रोक्षति व्रीहीनवहन्तीत्यादिसंस्कारविधिषु व्रीह्यनाशादिपदानामपूर्वीयव्रीह्यादिषु लक्षणा कल्पनीया लौकिकेषु व्रीह्यादिषु संस्कारविध्यानर्थक्यात् । तथा चापूर्वीयत्वं यवादिसाधारणमिति संस्काराणां यवादिसाधारण्यसिद्धिरिति मीमांसकसरणिः ।

* * * *

मन्त्राणां दृष्टादृष्टद्वारविशेषौदासीन्येन लिङ्गविनियोगात्पूर्वं प्रकरणादपूर्वार्थत्वसिद्धिवद्गुणप्रधान.

R. No. **1377.**

Paper. 11⅛ × 8½ inches. Foll. 148. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914-15 from the MS. of M.R.Ry. A. M. Śrīnivāsācārya of Agaram, a village in the Chingleput district.

लक्ष्मीकाव्यम्.

LAKṢMĪKĀVYAM.

A poem in eighteen Sargas dealing with the celebration of the marriage of Lakṣmī who was born as the daughter of a Cōla king and God Raṅganātha worshipped in the temple at Srirangam. A festival is celebrated even to this day in commemoration of this marriage in the month of Phālguna in the Sriraṅgam temple and a history and description of that festival are given herein. The names of the Śrī-Vaiṣṇava teachers who lived in Srirangam are given in the introductory portion of this work. By Uttamarāya Tirumalādhīśa, son of Cakrarāya and Lakṣmī. It is stated that Cakrarāya had two brothers, Uttamarāya and Timmaṇārya, the latter of whom became a Sannyāsin, and that he had two other sons, viz., Cakrarāya and Kṛṣṇarāya.

Wants the beginning in the first Sarga.

**Beginning:**

भूषाभुजङ्गेश्वरभुक्तशेषपक्षानिलाधूतकुलाद्रिमाला ।
रङ्गेशयाग्रेसरवैजयन्ती पुष्णातु भूतीर्मम वैनतेयः ॥

* * * *

मनोज्ञगीतामकरन्दपूर्णं सपादलक्षोज्ज्वलपद्यपत्रम् ।
चक्रे महाभारतपुण्डरीकं यस्तं मुनिं चन्द्रसरस्स्थमीडे ॥

मोक्षैकसङ्ख्याङ्गुलिमुद्रयैव मोहान्धकारं नमतां जनानाम् ।
मुष्णाति यश्चन्द्रिकयैव चन्द्रः पराङ्कुशो रङ्गनिधिस्स जीयात् ॥

मोषैः कृतैर्येन तथा प्रहृष्टो देवस्तथा सालमहानसाद्यैः ।
स्तोत्रैश्च नं प्रीतिमुपैति रङ्गी तमाश्रयाम्यादिचतुष्कवीन्द्रान् ॥

यस्योपदेशो यतिधूर्वहस्य प्रपत्तिभाजां प्रशमैकहेतुः ।
रङ्गेशपादाम्बुजभृङ्गराजो रामानुजार्यो रमतां स चित्ते ॥

रङ्गेशकैङ्कर्यकलाकलापपर्यायसेनाधिपतिप्रकाशः ।
जयत्वनन्तप्रतिमानधामा रामानुजार्यो विनतार्तिहारी ॥

* * * *

अस्ति त्रिलोकीप्रथिता मनोज्ञा विस्तीर्णवीथीविपुलापणश्रीः ।
रङ्गाभिधाना नगरी विभूत्या जितामराधीश्वरराजधानी ॥

* * * *

अनन्तशाखार्थरहस्यगर्भैरप्राकृतैर्द्राविडसूक्तिबन्धैः ।
प्रदृष्टवैकुण्ठपदो जनानां पराङ्कुशो यत्र विभाति योगी ॥

अपि प्रसिद्धावरणादिकृप्तेरपि प्रशस्तस्तुतिसंप्रयोगात् ।
मोषैः परं मोदितरङ्गिचेता जागर्ति यत्रादिचतुष्कवीन्द्रः ॥

रामानुजाख्यो यतिसार्वभौमः शेषावतारो जगदेकवन्द्यः ।
प्रकाशयन्नात्मविवेकमुद्रामास्ते सदा यत्र पवित्रकीर्तिः ॥

श्रीरङ्गनारायणनामधेयो यतीश्वरो यत्र जयत्युदारः ।
अशेषवन्द्यो विशदान्तरात्मा मुकुन्दमूर्तेरपरावतारः ॥

पुत्रीकृतो रङ्गधुरन्धरेण पराशरः कूरकुलाधिनाथः ।
गोविन्दशिष्यः स तु यामुनार्यमनोरथं पूरितवान् द्वितीयम् ॥

पुत्रत्वमाप्तः पुरुषोत्तमस्य सुदर्शनस्थापनदीक्षितात्मा ।
श्रीव्यासभट्टः प्रथितानुभावो यस्यां विजेता वचसा चकास्ति ॥

विशुद्धविज्ञानगुणेन पूर्णः पूर्णाभिधानः पुरुषोत्तमश्रीः ।
रामानुजाचार्यगुरुर्गरीयान् यस्यां निवासं कलयत्यजस्रम् ॥

आचार्यकं वेदशिरोरहस्ये तन्वन् पुनर्द्रामिडवेदतत्त्वे ।
श्रीसौम्यजामातृमुनिर्हि यस्यामद्यापि जागर्ति यशःशरीरः ॥

वाग्वैखरीखण्डितवादिलोको वाधूलवंशार्णवपूर्णचन्द्रः ।
जागर्ति यस्यां वरदार्यसूनुः श्रीवेङ्कटेशो गुरुरागमानाम् ॥

गोविन्दराजान्वयजो मनीषी पराङ्कुशो यामुनवैमनस्यम् ।
अपाचकार प्रसभं तृतीयं विराजते वृत्तमणिप्रदीपः ॥
श्रीवेङ्कटेशार्पिततातनामा धीराग्रगण्यस्तिरुनम्बिवंश्यः ।
गोत्रे पवित्रे शठमर्षणीये जातः समिन्धे तिरुवेङ्कटार्यः ॥
श्रीरङ्गधाम्ना जगदेकधाम्ना वेदान्तविद्याकृतपट्टबन्धः ।
विश्वप्रतीतप्रतिवादिविद्वद्भयंकरो यत्र विभाति विद्वान् ॥
यत्र प्रपत्त्याभरणाभिरामो रामानुजाचार्य इति प्रतीतः ।
आभाति रामानुजदर्शनाब्धिप्रालेयभानुः प्रथितानुभावः ॥
आसेतुकेता(दा)रमशेषविष्णुस्थानानि येनाखिलवन्दितानि ।
उन्मीलितानि द्रविणैरुदग्रैः रामानुजार्यः स विभाति यस्याम् ॥
द्विजन्मनां यत्र सहागतानां रङ्गेश्वरेणोत्तमराय एषः ।
दीप्तोदयानां दिवि तारकाणां राकाचकोरप्रणयीव भाति ॥
द्विजोत्तमो यत्र चकास्ति साक्षात्ताक्ष्योपमः काश्यपवंशदीपः ।
सत्पक्षपात्युत्तमरायनामा रङ्गेश्वराज्ञाधुरि वर्तमानः ॥
उदारधीरुत्तमराय एष संप्राप्तलोकोत्तमराजचिह्नः ।
रङ्गेशवंशक्रममूलभृत्यो यां शास्ति वैकुण्ठपुरादनूनाम् ॥
जीर्णां त्वचं सर्प इवालकेशसंपत्समां संपदमाशु मुक्त्वा ।
यस्यानुजो यत्र च तिम्मणार्यः प्राप्तो यतित्वं भजते मुकुन्दम् ॥
तस्याग्रजः स्थापितभूसुरेन्द्रबृन्दोऽनिशं यत्र विभाति धीमान् ।
मृष्टान्नदाता भुवि चक्ररायो हृष्टो मुकुन्दाङ्घ्रियुगप्रपत्त्या ॥
तस्यात्मजाश्चोत्तमचक्रराय श्रीकृष्णरायाः प्रथिताः पृथिव्याम् ।
यां पालयन्तो विलसन्ति राजन् सौवर्णमञ्चादिनरेन्द्रचिह्नाः ॥

* * * *

शय्यापन्नगमण्डलेश्वरफणासंदोहरत्नोल्लस-
द्भासा सागरसार्वभौमतनयावक्षोजकुम्भस्थलीम् ।
कुर्वन् कुङ्कुमपाङ्किलामनुकलं ब्रह्माण्डकोटीश्वरो
जागर्त्यण्डजचक्रवर्तिरथवान् श्रीरङ्गराजो हरिः ॥

**Colophon:**

देवो यस्य भुजङ्गभोगशयनः श्रीरङ्गराजो हरि-
स्तातः काश्यपचक्ररायविबुधो लक्ष्मीर्जनन्युत्तमा ।
तस्यैवोत्तमरायसत्तिरुमलाधीशप्रबन्धुः कृतौ
लक्ष्मीकाव्य उदारवैभवनिधौ सर्गोऽयमादिर्गतः ॥

* * * *

ततो जगन्मङ्गलहेतवे हरे शुभे दिने मासि च फाल्गुनेऽधुना ।
त्वया ध्वजारोहणपूर्वमुत्सवः प्रवर्ध्यतां वर्धितवाद्यनिस्वनः ॥

**End:**

एवं सप्तसु वासरेषु विहृतिं कृत्वा भुजङ्गोत्तमे
पर्यङ्के कमलामहीकुचतटीकाश्मीरपङ्काङ्कितः ।
आसीनो रसिकाग्रणीः स भगवान् सर्वान् सदा नन्दयन्
आनन्दस्य महोत्तरस्य नितरां कोटिं परामश्नुते ॥

**Colophon:**

देवो यस्य भुजङ्गभोगशयनः श्रीरङ्गराजो हरि-
स्तातः काश्यपचक्ररायविबुधो लक्ष्मीर्जनन्युत्तमा ।
तस्यैवोत्तमनम्बिसत्तिरुमलाधीशप्रबन्धुः कृतौ
लक्ष्मीकाव्य उदारवैभवनिधौ सर्गो गतोऽष्टादशः ॥

---

R. No. **1378.**

Palm-leaf. $10\frac{5}{8} \times 9\frac{1}{4}$ inches. Foll. 70. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Kumārasvāmi Śāstri of Pedakallapalli.

महाविद्योद्धारः.

MAHĀVIDYŌDDHĀRAḤ.

A treatise describing the Nyāsa, Japā, Pūjā and Hōma, etc., in connection with the Vanadurgā-Mahāvidyāmantra. The work is also called Kalpakaustubha.

Almost complete; as found in the Siddhāgamatantra forming part of the Rudrayāmala.

**Beginning:**

सर्वेश्वरीं जगद्धात्रीं जगदम्बां परापराम् ।
नमाम्यहं महादेवीं महात्रिपुरसुन्दरीम् ॥
सर्वकामप्रदातारं भक्तानां . . . . . ।
. . . . . त्तरहितं वटुकं प्रणमाम्यहम् ॥

* * * *

पार्वती—

भगवन्दक्षिणामूर्ते सर्वज्ञ करुणानिधे ।
वनदुर्गामहाविद्यामन्त्रस्याभीष्टदायिनः ॥
माहात्म्यं कामदं नृणां यदि तेऽस्ति कृपा मयि ।

* * * *

एवं कृत्वा च दिग्बन्धमैन्द्रादीन्व(र्व)न्दयेद्दिशः ।
निगमैरागमैर्मन्त्रैः रुद्रबन्धनपूर्वकम् ॥

**Colophon:**

इति श्रीरुद्रयामले सिद्धागमतन्त्रे महाविद्योद्धारे चतुरशीतितमः पटलः ॥

**End:**

एवंविधां महाविद्यां शिष्यायोपदिशेद्गुरुः ।
गुरुभक्ताय कान्ताय दान्ताय च कुटुम्बिने ॥

* * * *

अनन्तरदिने चैकविंशद्वारं जपेत्सुधीः ।
ब्रह्मचारी हवि.

---

R. No. **1379.**

Paper. $11\frac{1}{4} \times 8\frac{3}{4}$ inches. Foll. 7. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. S. Gōpālācārya of Villiyambākkam.

लकारार्थमञ्जरी.
LAKĀRĀRTHAMAÑJARĪ.

A short treatise discussing the significance of the various tenses and moods in Sanskrit: by Siddhānta Vāgiśa, probably the same as Bhavānandasiddhānta Vāgīśa.

Complete.

**Beginning:**

पचति पक्ष्यति अपाक्षीत् इत्यादौ वर्तमानत्वादिना प्रतीतेः वर्तमानत्वे लट्त्वादिना, वर्तमानप्रागभावप्रतियोगित्वरूपे भविष्यत्त्वे लट्त्वादिना, वर्तमानध्वंसप्रतियोगित्वरूपातीतत्वे लुङ्त्वादिना शक्तिः; न त्वाख्यातत्वेन, सर्वत्र प्रत्ययापत्तेः । ननु वर्तमानत्वं न कालसम्बन्धित्वम्, अतीतादावतिप्रसङ्गात् ।

**End:**

एवंच निरुक्ताया आज्ञादिसाधारणत्वात् विजातीयेच्छैव पूर्वत्रेव याच्ञापदार्थः । एवमाज्ञानुज्ञादिरपि विजातीयेच्छैव । समिधमाहरेत्यादौ यदाज्ञाविषयसमित्कर्मकाहरणानुकूलकृतिमानित्यन्वयबोध इत्यलम् ॥

**Colophon:**

इति सिद्धान्तवागीशविरचिता लकारार्थमञ्जरी समाप्ता ॥

---

R. No. **1380.**

Paper. $11\frac{1}{4} \times 8\frac{7}{8}$ inches. Foll. 74. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Śivarāma Śāstri of Trichinopoly.

स्मृतिसङ्ग्रहः.

SMṚTISAṄGRAHAḤ.

Similar to the work described under No. 2808 of the D.C.S. MSS., Vol. V.

Incomplete

**Beginning:**

श्रोत्रियं सुभगं गां च ह्यग्निमग्निचितं तथा ।
प्रातरुत्थाय यः पश्येत् पापेभ्यः स प्रमुच्यते ॥
पापिष्ठं दुर्भगं मत्स्यं नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत् तत्कलेरुपलक्षणम् ॥
नग्नपदं बाह्यव्यतिरिक्तविषयम् । अथ बहिर्विहारः ।

तत्र व्यासः —

नक्षत्रज्योतिरारभ्य त्वा सूर्योदयदर्शनात् ।
प्रातस्सन्ध्येति तां प्राहुः श्रि(श्रु)तयो मुनिसत्तमाः ॥

**End:**

तुलसीकाष्ठसम्भूतां स्कन्धे मालां बिभर्ति यः ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्विजकर्मणः ॥ इति ।

गौतमः—

अनेन विधिना नित्यं जपं कुर्यात् प्रयत्नतः ।
प्रपन्नो विपुलान् भोगान् भुङ्क्ते मुक्तिं च विन्दति ॥ इति ।

---

R. No **1381.**

Paper. 11 × 8½ inches. Foll. 323. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Tiru. Śrīnivāsavarada Tātācārya of Villiyambākkam, a village in the Chingleput district.

ब्रह्मसूत्रभाष्यव्याख्या—लघुभावप्रकाशिका.

BRAHMASŪTRABHĀṢYAVYĀKHYĀ: LAGHUBHĀVA-PRAKĀŚIKĀ.

A brief commentary on the Śrībhāṣya of Bhagavad Rāmānujācārya, which work has been described under No. 4943 of the D.C.S. MSS., Vol. X: *by* a disciple of Śrīnivāsa Tātārya. Reference is made herein to the Śrutaprakāśikā of Sudarśanasūri.

Contains the Catussūtrī Prakaraṇa only.

**Beginning:**

वन्दे वाञ्छितलाभाय कुन्देन्दुधवलस्मितम् ।
मन्देतरघनप्रख्यं तं देवममराधिपम् ॥
. . . . . . . . . निरस्तनिखिलाहितः ।
तं श्रीनिवासतातार्यगुरुवर्यमहं भजे ॥
सङ्गृह्य लिख्यते सेयं लघुभावप्रकाशिका ।

इह खलु भगवान् रामानुजमुनिः सकलजनानुग्रहाय बोधायनादिपूर्वाचार्यमत . . . . . . . . . . . . . शास्त्रं व्याचिख्यासुस्तदर्थतत्त्वनिर्णयस्य भक्त्या त्वनन्यया शक्य इति प्रमाणवशेन भगवद्भक्तिसाध्यत्वं मन्यमानः प्रारिप्सितभाष्यग्रन्थस्याविघ्नपारे . . . . . . . . . . भक्तिप्रार्थनारूपं मङ्गलमाचरति—अखिलेत्यादिना । अत्र शिष्यबुद्धिसमाधानार्थं शास्त्रार्थसंक्षेपश्चार्थतः कृतो भवति । अखिलभुवनजन्मस्थेमभङ्गेति प्रथमाध्यायार्थः संक्षिप्तः । लीलेत्यनेन लोकवत्तु लीलाकैवल्यमिति द्वितीयाध्यायार्थः संक्षिप्तः ।

**End:**

यत्सम्बन्धि सुखं दुःखनिवृत्तिश्च पुरुषार्थः स खल्वहमर्थः । अहं निर्दुःखः सुखी स्यामिति हि प्रतीतिः । तस्य पुरुषार्थवतो नाशः कथं पुरुषार्थः पुरुषार्थान्तरं वा कथमर्थयितुस्तस्याभावे पुरुषार्थो भवेदित्यादि बहुतरं प्रपञ्चितं श्रुतप्रकाशिकायां तत्रैव द्रष्टव्यम् ॥

**Colophon :**

इति लघुभावप्रकाशिकायां श्रीमद्भाष्यव्याख्यायां चतुस्सूत्री ॥

---

R. No. **1382.**

Paper. $10\frac{5}{8} \times 9\frac{1}{2}$ inches. Foll. 241. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. M. Rāmakṛṣṇakavi of Vanaparti.

### तत्त्वंपदार्थविवेकः.
### TATTVAMPADĀRTHAVIVĒKAḤ.

Similar to the work described under R. No. 193(*h*) *ante.* By Pūrṇānandasarasvatī, a disciple of Puruṣōttamānandasarasvatī, who was himself the disciple of Advaitānanda.

The author discusses in this work the meaning of the words 'Tat' and 'Tvam' contained in the Śruti 'Tattvamasi.' with special reference to certain passages contained in Madhusūdanasarasvatī's Siddhāntabindu relating to the eighth verse of Daśaślōkī.

Complete.

**Beginning :**

ईशानविष्णुशब्दाद्यैर्यद्वाच्यं रामनामकम् ।
कारुण्यपूर्णनयनं कामरूपं भजाम्यहम् ॥
नमः श्रीज्ञानमुद्राय वटमूलनिवासिने ।
अज्ञानध्वान्तनाशाय गुरवे मुनये सदा ॥
सिद्धान्तबिन्दोर्व्याख्यानं ब्रह्मानन्देन भिक्षुणा ।
कृतमप्येकदेशस्य तात्पर्यं वर्ण्यतेऽधुना ॥

अथ 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इत्यादिश्रुत्यनुसारेण ज्ञानतज्जन्यान्तःकरणोपाधिकतया एकस्यैव चैतन्यस्य जीवेश्वरविभागसंभवेऽप्यज्ञानोपाधिकचित्स्वरूपेश्वरपदशक्यतावच्छेदकस्य विभिन्नधर्मिवाचकपदशक्यतावच्छेदकत्वाभावेन न तस्य शिवेशानादिपदवाच्यत्वम् । न वा विष्ण्वादिपदवाच्यता, तेषां तत्र केवलयोगवृत्त्यैव प्रयोगसंभवादित्याशङ्कानिराकरणायेश्वरोपाधिभूताज्ञानस्यैकरूपत्वेऽपि मैत्रायणीय-

श्रुत्यनुसारेण स्वगतसत्त्वादिगुणविशिष्टत्वेन भेदमुपेत्य तदुपाधिकतयैकस्यैव नानाशब्दवाच्यत्वं दर्शयति—तत्र ईश्वरोऽपि त्रिविधः स्वोपाधिभूताविद्यागुणभेदेन ब्रह्मविष्णुमहेश्वरभेदादिति । त्रिविधः त्रिप्रकारः ; त्रयः प्रकारा धर्मा यस्येति व्युत्पत्त्या धर्मत्रयविशिष्ट इति यावत् ।

**End:**

तत्तत्पुरुषीयतत्तज्ज्ञानतत्तदज्ञानाभावकूटविशिष्टचरममुक्तपुरुषीयचरमतत्त्वसाक्षात्कारस्यैव तत्तदधीनतत्पुरुषीयाज्ञानोभयनाशकत्वोपगमेन तदानीं सद्वितीयत्वापादनासंभवात् । अभावस्याधिकरणस्वरूपतया न तेन सद्वितीयापत्तिरिति शिवम् ॥

यं प्राहुर्निखिलागमाः प्रतिदिनं ध्यायन्ति यं योगिनो
यं ज्ञात्वैव पराशरप्रभृतयः संसारपाथोनिधिम् ।
तीर्त्वा मुक्तिमुपागताः श्रुतिमतीं निर्दुःखरूपां शुभां
तं भूमानमुपास्महे रघुवरं चिन्मुद्रयालंकृतम् ॥

* * * *

यः पौलस्त्यकुलान्तकोऽपि सततं हर्यादिसंरक्षणे
दक्षः स्वल्पफलाशनोऽप्यनुपमं स्वीयं पदं स्वेच्छया ।
दत्तं येन समस्तपुण्यनिचयैः प्राप्यं शबर्यै पुन-
स्तं भूमानमुपास्महे रघुवरं चिन्मुद्रयालंकृतम् ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यसर्वतन्त्रस्वतन्त्रश्रीम(द)द्वैतानन्दपादपूज्यशिष्यपुरुषोत्तमानन्दसरस्वतीशिष्यपूर्णानन्दसरस्वतीकृततत्त्वंपदार्थविवेके त्वंपदार्थनिरूपणम् ॥

किंचिदत्र विरुद्धं चेदुक्तं दैववशान्मया ।
शान्तेः पुरुषधर्मत्वात् तत्क्षन्तव्यं मनीषिभिः ॥

इति पूर्णानन्दसरस्वतीकृततत्त्वंपदार्थविवेकः संपूर्णः ॥

R. No. **1383.**

Paper. $10\frac{5}{8} \times 9\frac{3}{8}$ inches. Foll. 76. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Tāṅgal Rāmasvāmi Śāstri of Viriñcipuram.

प्रत्यक्तत्त्वप्रकाशिका.

PRATYAKTATTVAPRAKĀŚIKĀ.

Same work as that described under R. No. 1168 *ante.*

Complete in four Adhyāyas.

---

R. No. **1384.**

Paper. $10\frac{3}{4} \times 9\frac{1}{2}$ inches. Foll. 28. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Tāṅgal Rāmasvāmi Śāstri of Viriñcipuram.

नामसङ्कीर्तनम्.

NĀMASAṄKĪRTANAM.

On the greatness and religious efficacy resulting from the repetition of the different names of God as described in the Brahmasaṁhitā, Kātyāyanasaṁhitā, etc.

Incomplete.

**Beginning:**

यन्नामकीर्तनादेव सद्यः पापक्षयो भवेत् ।
तमहं संस्मरामीशं शिवं कृष्णं विमुक्तये ॥

ननु नामकीर्तनात्सद्यः पापक्षयप्रतिपादकमन्त्रात् संवादेतिहासपुराणोपपुराणसंहितागमादीनां कर्मानुष्ठानपराणां स्वार्थे प्रामाण्यं नास्तीति चेत्, मानान्तरसंवादिविसंवादिवाक्यानामग्निर्हिमस्य भेषजम्, स प्रजापतिरात्मनो वपामुदखिदत्, यजमानः प्रस्तर इत्यादीनामे(व) प्रामाण्यम् ।

* * * *

ब्रह्मसंहितायामपि नामकीर्तनप्रस्तावे बोधायनं प्रति श्रीकृष्णः—

मन्नामकीर्तनफलं विविधं निशम्य
न श्रद्दधातिमनुते यदुतार्थवादम् ।
यो मानुषस्तमिह दुःखचये क्षिपामि
संसारघोरविविधार्तिनिपीडिताङ्गम् ॥ इति ।

कात्यायनसंहितायाम्—

अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः ।
स पापिष्ठो मनुष्याणां नरके पतति स्फुटम् ॥ इति ।

**End :**

कपिलाकोटिदानस्य कन्यादानायुतस्य च ।
यत्फलं लभते जन्तुस्तत्फलं हरिकीर्तनात् ॥

---

R. No. **1385.**

Paper. $11\frac{1}{8} \times 8\frac{3}{4}$ inches. Foll. 98. Lines, 20 in a page. Telugu. Good.

Transcribed in 1914-15 from a palm-leaf MS. of M.R.Ry. Mārkaṇḍēya Śarma of Guntur.

ब्रह्मसूत्रलघुवृत्तिः.

BRAHMASŪTRALAGHUVṚTTIḤ.

A brief commentary on the Brahmasūtras of Vyāsa written in accordance with the Advaita school of Vēdānta. The difference in the views held by Vācaspatimiśra and others is also incidentally noticed.

Complete

**Beginning :**

शङ्करं शङ्कराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥

ओं नमो गुरुभ्यः.

आत्मा वारे द्रष्टव्यः श्रोतव्य इत्यादौ

अथातो ब्रह्मजिज्ञासा । साधनचतुष्टयसम्पन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तविचारः कर्तव्यः । वाचस्पतिमिश्रमते तु साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मज्ञानेच्छा भवति । कर्मफलस्यानित्यत्वात् ब्रह्मज्ञानात्पुरुषार्थश्रवणाच्च ।

शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः ।
समन्वयाविरोधौ च साधनं च फलं तथा ॥

यतो वा इमानि भूतानि जायन्त इत्यादौ जन्माद्यस्य यतः ।

**End:**

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्ताः तेषामनावृत्तिरेव तेषां न पुनरावृत्तिः क्रममुक्त्यभिधायकशब्दात् । न स पुनरावर्तते न स पुनरावर्तत इति श्रुतिश्शब्दः । निर्गुणब्रह्मविदां त्वावृत्तिशङ्कैव नास्तीत्यर्थः ॥

**Colophon:**

इति ब्रह्मसूत्रलघुवृत्तिः समाप्ता ।

---

R. No. **1386.**

Paper. 11¼ × 9 inches. Foll. 167. Lines, 20 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a paper MS. of M.R.Ry. M. Rāmakṛṣṇakavi of Vanaparti, a town in Hyderabad.

**वेदान्तसूत्रमुक्तावली.**

VĒDĀNTASŪTRAMUKTĀVALĪ.

This is a commentary on the Brahmasūtras of Vyāsa. By Brahmānandasarasvatī, pupil of Paramānandasarasvatī. He says that he has followed the Nirṇayadarpaṇa and other works of his learned predecessors.

Breaks off in the fourth Pāda of the third Adhyāya.

**Beginning :**

चरणौ शरणीकुर्मः श्रीमन्नारायणप्रभोः ।
अपि श्रीविश्वनाथस्य परमानन्दरूपिणः ॥
भाष्यार्थो निरणायि यः श्रुतिपथन्यायाम्बुधेः पारगैः
विज्ञैर्निर्णयदर्पणप्रभृतिषु ब्रह्मापरोक्षान्वितैः ।
तं बुद्ध्वा तनुते गुरुप्रभृतिभिस्तन्मात्रचेतोगतिः
ब्रह्मानन्दसरस्वती श्रुतिशिरस्सूत्रेषु मुक्तावलीम् ॥

अथेयं शारीरकमीमांसा नारभ्या, कर्तृत्वादिबन्धस्य समूलस्य सत्यतया ज्ञानानिवर्त्यत्वात् तन्निवृत्तेः फलस्य तत्कामस्याधिकारिणो जीवपरयोरैक्यस्य विषयस्य चासम्भवात्। वेदान्तानामर्थवादत्वेन विचारविधिफलादिषु तात्पर्याभावात् वेदार्थमात्रविचारस्य पूर्वमीमांसया कृतत्वाच्चेति प्रत्याह—अथातो ब्रह्मजिज्ञासेति । नित्यानित्यविवेकभोगमात्रारागशमदमोपरमतितिक्षासमाधानानन्तर्यमथशब्दार्थः । अत इति ल्यब्लोपे पञ्चम्या इमां मुमुक्षामवाप्येत्यर्थः । नित्यानित्यविवेकादिमुमुक्षान्तस्य अथशब्दार्थानन्तर्यप्रतियोगिनः सम्भवप्रदर्शनार्थमत इति भाष्यादिः ।

* * * *

**Colophon :**

इति श्रीपरमानन्दसरस्वतीपूज्यपादशिष्यश्रीब्रह्मानन्दसरस्वतीविरचितायां वेदान्तसूत्रमुक्तावल्यां प्रथमस्याध्यायस्य चतुर्थः पादः ॥

इति प्रथमाध्यायः समाप्तः ॥

**End :**

दर्शनाच्च ॥

काम्यानां स्वप्रयोजनकामनायामनित्यत्वेनानित्यत्वदर्शनाच्च न यागाङ्ग[ा]श्रितोपासनानां समुच्चयः किं तु यथाकाम्यमिति ॥

इति यथाश्रयभावाधिकरणम् ॥

**Colophon:**

इति श्रीब्रह्मानन्दसरस्वतीविरचितायां सूत्रमुक्तावल्यां तृतीयस्याध्यायस्य तृतीयः पादः ॥

अथ पुरुषार्थाधिकरणम् । चतुर्थेन सगुणनिर्गुणविद्यानां क्रतूपकाराद्भिन्ने फले साधनत्वनिर्णयात्फलभेदे साधित एव तृतीये तासां भेदाभेदौ सिध्यत इति हेतुहेतुमद्भावः पादयोः सङ्गतिः ।

* * * *

उपेत्य तु स्त्रियं कामात्प्रायश्चित्तं विधीयते ।
प्राणायामसमायुक्तः कृच्छ्रं मन्दं समाचरेत् ॥
तत्रैव च यतिः शान्तः कुर्यात्सान्तपनं व्रतम् ।
ततश्चरति निर्दोषः कृच्छ्रस्यान्ते समाहितः ॥
पुनश्चाश्रममागत्य चरेद्भिक्षुरतन्द्रितः ।

इत्यादिः प्रणवजपादिश्च बोध्यः। कृतप्रायश्चित्तेरपि प्रकृतं प्राणायामादिविध्यर्थमिति प्रयोजनसङ्गती ॥

इति आधिकारिकाधिकरणं समाप्तम् ॥

---

R. No. **1387.**

Paper. 10¾ × 9⅝ inches. Foll. 154. Lines, 20 in a page. Telugu.

Transcribed in 1914-15 from a MS. of M.R.Ry. Puruṣōttamakavi of Masulipatam.

Bound in two volumes.

काशीमाहात्म्यम्.
KĀŚĪMĀHĀTMYAM.

Similar to the work described under No. 2388 of the D.C.S. MSS., Vol. IV, Part 2.

As found in the third part of the Brahmavaivartapurāṇa. Contains Adhyāyas 1 to 26, the headings of which are given below :—

१. गुरुभक्तिस्वरूपकथनम्.
२. काशीस्वरूपप्रकटनम्.
३. काशीमाहिमवर्णनम्.
४. सोमशर्मोपाख्यानम्.
५. महासेनोपाख्यानम्.
६. मोक्षोपायकथनम्.
७. प्रायश्चित्तप्रसङ्गः.
८. प्रायश्चित्तनिर्णयः.
९. Do.
१०. पञ्चक्रोशयात्रा.
११. क्षेत्रप्रदाक्षिणम्.
१२. प्रायश्चित्तविधिः.
१३. तीर्थकथनम्.
१४. काशीप्रादुर्भावः.
१५. ब्रह्मक्षेत्रमाहात्म्यम्.
१६. स्थितिक्रमः:
१७. शिवशक्तिलिङ्गोपाख्यानम्.
१८. कामकलाख्यानम्.
१९. वीरसेनोपाख्यानम्.
२०. श्रवणविधिः.
२१. गङ्गाकथा.
२२. नरकवर्णनम्.
२३. यातनापापकथनम्.
२४. काशीकथा.
२५. Do.
२६. रहस्यातिरहस्यकथनम्.

**Beginning:**

भवानीतनयाद्याद्यतनयानन्द दायक ।
काशीवासिजनाघौघहारिन् धुण्ढे नमोऽस्तु ते ॥
जयति जयति काशी काशितज्ञानराशिः
शिवहरिहरधातृश्रीगणेशाम्बिकानाम् ।
निवसतिरियमाद्या तां भजध्वं भजध्वं
स्मरत नमत शुद्धां शुद्धये कीर्तयध्वम् ॥

ऋषय ऊचुः—

युगानि युगमानं च युगधर्माः सनातनाः ।
युगेषु लोकचरितं श्रुतमस्माभिरादितः ॥

पुनः कलियुगस्यास्य स्वरूपं वर्णयादितः ।
कलिनाधर्ममित्रेण वञ्चिता अपि सज्जनाः ॥

श्रीसूत उवात—

संहृत्य सर्वं शुद्धेऽम्भस्यद्वयो हरिरव्ययः ।
प्रबुद्धो बुधसंसेव्यस्तदा नाभेरजायत ॥

* * * *

न काशिकायां पतितोऽपि धर्मकृद् दुःखं समाप्नोति मम प्रसादात् ।
इति प्रतिज्ञा जगदीश्वरस्य महानुभावस्य शिवस्य नित्यम् ॥
काश्यां प्रदीपप्रभया प्रकाशितं पापान्धकारः खलु नाशमेति ।
विश्वेशदेहोद्भवया सुविद्यया महात्मनां पुण्यकृतां कृतात्मनाम् ॥

**Colophon :**

इति श्रीब्रह्मवैवर्ते तृतीयभागे काशीमाहात्म्ये गुरुभक्तिस्वरूपकथनं नाम प्रथमोऽध्यायः ॥

**End :**

सूतः—

इदं महाख्यानमशेषपाप्मनां विनाशनं काशिनिवाससौख्यदम् ।
शृण्वन्ति गायन्ति महानुभावाः परां मुदं प्राप्य परां लभन्ते ॥

* * * *

स्थूलादपि स्थूलतरा काशिका ब्रह्मरूपिणी ।
यथा मनुष्यदेहेऽस्मिन् शोधिते सति वस्तुतः ॥

**Colophon :**

इति श्रीब्रह्मवैवर्ते महापुराणे तृतीयभागे काशीमाहात्म्ये रहस्यातिरहस्यः षड्विंशोऽध्यायः ॥

Fol. 154*b* contains two stanzas relating to Dharmaśāstra.

## R. No. 1388.

Paper. 10⅝ × 9½ inches. Foll. 143. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. S. Gōpālācāriyar of Villiyambakkam

### पाण्डवपुराणम्.
### PĀṆḌAVAPURĀṆAM.

A work in eighteen Sargas briefly describing the story of the Mahābhārata as current among the Jainas: by Vādicandra, younger brother of Prabhācandra. The author is said to have consulted the Aṣṭasahasrī of Vidyānanda, the Jainēndracandrikā of Pūjyapāda, the Vādasindhu of Akalaṅka and the works of Samantabhadra, Hariścandra, Vīranandi, Puṣpadanta and Janañjaya.

The story is said to have been recounted by Vardhamāna, son of Siddhārtha who reigned at Kuṇḍina in the Vidēha country, to the King, Śrēṇika, and is said to have been traditionally transmitted in that line through successive generations, such as, Nēminātha, Padmanandi, Dēvēndrakīrti, Vidyānandi, Mallibhūṣa, Vīracandra and Jñānabhūṣaṇa to the author's brother Prabhācandra, from whom the author is said to have heard it. It is stated in this work that it was written in a place named Ghanaugha in the Puṣya month in the year 1654 (?) and that it contains 2,800 stanzas.

Complete ; the names of the Adhyāyas are given below :—

१. शिवपुराणाभिमतपाण्डवोत्पत्तिवर्णनम्.
२. जैनाभिमतधृतराष्ट्राद्युत्पत्तिवर्णनम्.
३. कौरवपाण्डवोत्पत्तिवर्णनम्.
४. पाण्डवक्रीडानेमिजिनजन्मवर्णनम्.
५. राक्षसजयकन्यालाभकरीन्द्रहननवर्णनम्.
६. पाण्डवस्वपुरप्रवेशार्धराज्योपलम्भवर्णनम्.
७. दुर्योधनमानोच्छेदवर्णनम्.
८. कीचकवधवर्णनम्.
९. विराटगोकुलानयनादिवर्णनम्.

१०. कृष्णपाण्डवप्राग्भवस्नेह-वर्णनम्.
११. उभयसेनामेलनवर्णनम्.
१२. गाङ्गेयस्वर्गगमनवर्णनम्.
१३. जयद्रथवधवर्णनम्.
१४. द्रोणकर्णदुर्योधनवधवर्ण-नम्.
१५. द्रौपदीहरणपाण्डवमधुरा-प्रवेशवर्णनम्.
१६. द्वारकाहरिविनाशपाण्डव-वैराग्योत्पत्तिवर्णनम्.
१७. पाण्डवभवावलिवर्णनम्.
१८. पाण्डवमुनिनिर्वाणगमन-वर्णनम्.

**Beginning :**

नमः श्रीसिद्धनाथाय ज्ञानानन्दैकमूर्तये ।
स्वापूर्वार्थप्रकाशाय सुखदृग्वीर्यमूर्तये ॥
नमो वृषभनाथाय वृषवर्धनहेतवे ।
अपारभवपाथोधिसमुत्तरणसेतवे ॥
पशूनां समजो यस्य दृष्ट्वा विगतबन्धनः ।
स जीयाज्जगदानन्ददायको यदुनायकः ॥
दिदीर्वान् शम्भुजं गर्वं बभञ्ज्वान् भवपञ्जरम् ।
शिशीर्वान् लोकमिथ्यात्वं सुखं पुष्यात् स सन्मतिः ॥
त एव भूभृतां मान्या लोके स्तुत्यास्त एव हि ।
प्रातर्नमन्ति ये नित्यं भारतीपदपङ्कजम् ॥

* * *

श्रीमत्समन्तभद्राद्या जयन्तु श्रुतसागराः ।
वाक्कुठारैश्च येषां हि भिद्यन्ते कुमतद्रुमाः ॥
सप्तभङ्गान्विते यस्य वादसिन्धौ सरस्वती ।
मग्ना सुगतसंभूता स जीयादकलङ्कः ॥
विद्यानन्दो मुनिर्जीयात् सद्गुणः पात्रकेसरी
यस्मादष्टसहस्री च संभूता परपक्षहा ॥

स नन्द्यात्पूज्यपादेशो यस्माज्जैनेन्द्रचन्द्रिका ।
अजायत सदा सर्वजनजाड्यतमोऽपहा ॥

हरिश्चन्द्रः स मे देवो वीरनन्दी जनंजयः ।
महाकाव्यस्य कर्तारो जयन्तु जगतीतले ॥

षड्भाषाकविचक्रीशः पुष्पदन्तः परार्थकृत् ।
यद्ग्रन्थास्स्तोकबुद्धीनामगम्या हि पदेपदे ॥

एतेषां ग्रन्थमालोक्य पण्डितानामपण्डितः ।
वादिचन्द्रः कथं कुर्याद्भारतं भुवनोत्तमम् ॥

शब्दशास्त्रे न कौशल्यं न पुराणपरिश्रमः ।
नालोकितोऽपि सत्तर्को नाधीतोऽप्यागमोऽपि च ॥

ईदृशं कोऽपि नो कुर्यात् धाष्टर्यं लोके विचक्षणः ।
तारी चापि न कोऽप्यत्र संतरेत्पयसां पतिम् ॥

यथा कथंचिद्वदतो यथाशक्ति पुराणकम् ।
मम दोषो न वा ग्राह्यः साधुभिः सर्वसंमतैः ॥

अस्ति विस्तरतः प्रोक्त भारतं पूर्वसूरिभिः ।
तत्संक्षिप्य प्रवक्ष्यामि सद्वाक्यैरुपयोगिभिः ॥

कविदृष्टो जनः क्षुद्रो नीरसं चापि भूतलम् ।
नास्ति चैकापि सामग्री परं शासनभक्तितः ॥

अथ श्रीभरतक्षेत्रे विषयः श्रीविदेहकः ।
यं विभूष्य स्थितं भाति पुरं श्रीकुण्डिनाभिधम् ॥

तत्र सिद्धार्थराजेशस्तद्भार्या प्रियकारिणी ।
सा सुप्ता षोडश स्वप्नानद्राक्षीत् क्षणदात्यये ॥

गजं वृषं हरिं पद्मां पुष्पदामद्वयं विधुम् ।
रविं मीनं घटद्वन्द्वं सरः सिन्धुं स(सु)विष्टरम् ॥
नाक(कं)नागालयं रत्नपुञ्जं निर्धूमपावकम् ।
प्रेक्ष्य श्रीमान्प्र(मत्प्र)भोरग्रेऽवोचत् स्वप्नान् विविच्य च ॥

* * * *

अच्युतः स्वर्गगं हित्वा विमानं पुष्पकाभिधम् ।
भगवान् प्रियकारिण्या गर्भवासमुवास च ॥
आषाढशुक्लषष्ठ्यां(तु)सोमे हस्तान्तरान्तरे ।
सौम्येषु ग्रहयोगेषु लग्ने चातीव निर्मले ॥
महामहोत्सवं गेहे प्रतिमासं प्रकुर्वति ।
शुभ्रचैत्रत्रयोदश्यां सा सुतं तमजीजनत् ॥
समेत्य सहसा देवाः सेन्द्राः साप्सरसो गृहे ।
अभिषिच्याभकं मेरौ वीराख्यां हर्षतो जगुः ॥
यस्य जन्मोत्सवे सर्वा वृद्धिं याता विभूतयः ।
वर्धमानोऽयमित्याख्यत् पिता तस्माज्जनैर्वृतः ॥

* * * *

चतुरङ्गबलोपेतो गत्वानम्य पदाम्बुजम् ।
अस्तावीत्सन्मतिं भक्त्या श्रेणिकः संमताहितः ॥

* * * *

इति स्तुत्वा जिनाधीशं नामंनामं च गौतमम् ॥
धारंधारं महातोषमध्यास्त नरकोष्ठकम् ।
संलभ्य समयं राजा कुड्मलीकृत्य दोर्युगम् ॥
पप्रच्छ पाण्डुपुत्राणां चरितं चित्रतास्पदम् ।
केन पुण्येन संजाताः कस्य तीर्थो जिनेशिनः ॥

* * * *

कानीनस्तु पितामहः समभवत्पित्रादयो गोलकाः
तत्पुत्राः पृथगन्यताजनिताः कुण्डा ह्यमी पाण्डवाः ।
पञ्चानां द्रुपदात्मजा सहचरी युद्धे हता बान्धवाः
श्रीकृष्णेन कुलं कलङ्कमलिनं नीतं जगद्वन्द्यताम् ॥

इत्युक्त्वा विरराम वंशमखिलं श्रीपाण्डवानां नृपाः
श्रुत्वोवाच महामुनिर्गुणनिधिर्ज्ञानावधिर्गौतमः ।
नेदं तथ्यमसत्यतामुपगतं न श्राव्यमेतत्कथा
श्रोतव्यं प्रतिवासरं मुनिमुखाच्छ्रीपाण्डवीयं यशः ॥

**Colophon:**

इति भट्टारकश्रीप्रभाचन्द्रानुचरसूरिश्रीवादिचन्द्रविरचिते श्रीपाण्डव-पुराणे शिवपुराणाभिमतपाण्डवोत्पत्तिवर्णनो नाम प्रथमः सर्गः ॥

**End:**

यो भिल्लो वणिगुत्तमस्त्रिदशभूचिन्तागतिर्थः खगः
यो माहेन्द्रपतिर्बभूव विदितो यो वाऽपराजित्प्रभुः ।
यो वा षोडश नाकिनां पतिरभूत् स्वादिप्रतिष्ठो नृपः
यो वा श्रीशजयन्तगोनरनुतः श्रीनेमिनाथोऽवतात् ॥

स जीयात् पद्मनन्दीशो भारतीग(गु)च्छभूषणम् ।
पितेव पालयामास यो बृन्दं यतिनामिह ॥

यत्कीर्तिमुज्वलां श्रुत्वा मलिनाङ्गो निशाकरः ।
देवेन्द्रकीर्तिर्जीयात्(स) पालिताज्ञो नृपाधिपैः ॥

मूलसङ्घाम्बरद्योतिममतामददूरगः ।
समस्तजनतानन्दी विद्यानन्दी बभूव च ॥

तद्वंशाब्धिशरच्चन्द्रो नानामन्त्रस्फुरत्प्रभः ।
महिम्नो मन्दिरं जीयान्मल्लिभूषो मुनीश्वरः ॥

तस्य वंशाम्बरे सूर्यः लक्ष्मीचन्द्रो लसद्द्युतिः ।
सकलागमसद्वेदी लक्ष्यलक्षणलक्षितः ॥
वसुधाविदितख्यातिर्वाञ्छितार्थफलप्रदः ।
वीरचन्द्रो विदां वन्द्यो दर्शिताखिलसत्पथः ॥
अपनीतं विनेयानां येन जाड्यं हृदि स्थितम् ।
स जीयात् ज्ञानभूषेन्द्रो भवदुःखनिवारणः ॥
केचिच्छब्दप्रवीणाः कति च बुधजनास्तर्कशास्त्रेषु शूराः
केचित्सिद्धान्तसिन्धुप्रतरणपटवो मन्त्रवादाश्च केचित् ।
यं मुक्त्वान्यं यतीशं गुणगणनिलयं सर्वविद्याविनोदं
पश्यामो न (नो)पृथिव्यां वयमिह नयनैः श्रीप्रभाचन्द्रसूरिम् ॥
तत्पट्टविशदख्यातिर्वीरविद्याविशालधीः ।
वादिचन्द्रः कथामेनामप्राक्षीद्रससंभृताम् ॥
वेदबाणषडङ्के(ङ्क) च वर्षे तैषेऽथ मासि च
घनौघनगरेऽकारि पाण्डवानां प्रबन्धकः ॥
श्रीमद्वृषभनाथस्य प्रासादे मङ्गलोद्धुरे ।
नित्यं हुंफडसंघे च भक्तिभारं प्रकुर्वति ॥
बोधाय स्वल्पबुद्धीनां प्रसिद्धवचनोत्करैः ।
जुगुम्भ पाण्डुजातानां चरित्रं वादिचन्द्रमाः ॥
दृश्यते लेखकैर्यत्र संख्या चाष्टशतैरधि ।
द्विसहस्री सुवृत्तानां पाण्डवानां चरित्रके ॥

**Colophon :**

इति श्रीभट्टारकश्रीप्रभाचन्द्रानुचरसूरिश्रीवादिचन्द्रकृते पाण्डवपुराणे पाण्डवमुनिनिर्वाणगमनो नामाष्टादशः सर्गः ॥

पाण्डवपुराणं संपूर्णम् ॥

## R. No. 1389.

Paper. 10⅜ × 9⅜ inches. Foll. 153. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Tāṅgal Rāmasvāmi Śāstri of Viriñcipuram.

### सौभाग्यपद्धतिः.

### SAUBHĀGYAPADDHATIḤ.

A work giving details of procedure connected with the conduct of worship of the goddess Śakti with quotations from various authoritative works.

Complete.

**Beginning:**

. . . . . . . . . . . . . . न्तिदलम् ।
वासा . . . . गं च चतुर्दलं च सहिता शक्त्या गणेशं दले ।
तस्यास्त्युः प्रणवेऽजपा . . . . . मुष्टिर्मुनीन्द्रा विदुः ॥
घटिकार्धं श्रीललितासहस्रनामे श्रीहयग्रीव.

मूलाधाराम्बुजारूढा पञ्चवक्त्रा स्थले स्थिता ।
अङ्कुशादिप्रहरणवर्णे . . . . . दिनिषेविता ॥
मुद्गौदनासक्तचित्ता डाकिनीरूपधारिणी ।

श्रीमहाच्छन्दसारे—
श्रीशिवः—

उक्तलक्षणसम्पूर्णां डाकिनीं कनकप्रभाम् ।
चतुष्पत्रेषु देवेशीं वरदां च श्रियं तथा ॥

* * * *

यक्षाद्यैः सुरकिन्नरैः परिवृतैः सञ्चिन्त्य(विद्या)चणैः
पुन्नागाम्बुजनागपुष्पवकुलव्यासैस्सुरैरर्चितम् ।
नित्यं ध्यानसमस्तदीप्तकिरणं कालाग्निरुद्रोपमं
तं संहारकरं नमामि सततं पातालषष्ठं मुखम् ॥

ओं हं सः हं सां हं सस्सो हं अहर्निशमहोरात्रसङ्ख्यया गतदिवस-सङ्ख्यया षट्छतमजपाब्रह्मविद्याब्रह्मविद्यागायत्रीमहामन्त्रजपमहर्निशमहं नि-वेदयामि ।

**End:**

तदाप्रभृति निर्भीतो निर्विकल्पस्सुखी भवेत् ।
यावद्देहं गुरोराज्ञां मनसापि न लङ्घयेत् ॥
दृढभक्तिस्सदाचारश्चिन्मयं स्वं निरीक्षयेत् ।
निर्वाणदर्पणं नाम पद्धतिः कथिता मया ।
अनया परितुष्टोऽस्तु सिद्धानन्दगुरुस्सदा ॥

इति निर्वाणदर्पणं समाप्तम् ।

ऐं विजये विजये त्रैलोक्यवशङ्करि त्रैलोक्यममुकं मे वशमानय स्वाहा..

* * * *

वामाङ्कन्यस्तवामाकरतलकलितालिङ्गितो वामबाहौ
न्यस्तारक्तोत्पलाभः स्तनविधृतिलसद्वामबाहुः प्रियायाः ।
सर्वाकल्पाभिरामो धृतपरशुमृगेष्वादरः काञ्चना . . .

The name of the scribe and the date of transcription are given thus:

बहुधान्यनामसंवत्सरे वृश्चिकमासे शुक्लपक्षे प्रथमायां भानुवासरे श्रीवत्स-गोत्रोद्भवसुब्रह्मण्यपुत्रेण पतञ्जलिना सौभाग्यपद्धतिः लिखित्वा समाप्तम् ॥

**Colophon:**

इति सौभाग्यपद्धतिस्सम्पूर्णा ॥

---

R. No. **1390.**

Paper. $10\frac{5}{8} \times 9\frac{1}{4}$ inches. Foll. 160. Lines, 20 in a page. Grantha. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Tiru Śrīnivāsavarada Tātācāriyar of Villiyambākkam.

न्यायरत्नमाला.

NYĀYARATNAMĀLĀ.

By Pārthasārathimiśra, son and disciple of Yajñātman. Same as the work described under No. 1887 of Rājēndra Lal Mitra's Notices of Sanskrit MSS.

A treatise giving in verse and prose the reasonings and the chief doctrines inculcated by Kumārilabhaṭṭa in his work on Mīmāṁsā entitled the Tantravārtika.

Complete in five Paricchēdas.

**Beginning:**

आनन्दममृतं ज्ञानमजं साक्षिणमीश्वरम् ।
ब्रह्म सर्वमसर्वं सदसद्द्वन्द्वे विभुं हरिम् ॥
मीमांसार्णवसम्भूतैः कुमारस्वामिना कृतैः ।
न्यायरत्नैरहं मालां सङ्गृह्णामि मनोरमाम् ॥
तत्र स्वाध्यायविध्यर्थः प्रथमं तावदुच्यते ।
आचार्यदृष्टिमाश्रित्य प्रतिपक्षनिरासतः ॥
तत्र तावदिमं केचित् पूर्वपक्षं प्रचक्षते ।

* * *

कारकेण गृहीतत्वादेकत्वादेः क्रियार्थता ।
कारकश्रुतिगम्यत्वात् बाधते द्रव्यशेषताम् ॥
तथा पश्वर्थमेकत्वं पदश्रुत्या प्रतीयते ।
समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता ॥

इति तत्र समानप्रत्ययश्रुतिं दर्शयति । तस्मात् क्रिया विनियोक्त्रीति सूक्तम् ॥

**Colophon:**

इति न्यायरत्नमालायामङ्गनिर्णये प्रथमपरिच्छेदः ॥

**End:**

एतत्सर्वं वार्तिकसङ्ग्रहरूपेण भावनावचनो लिङ्शब्दस्तावत्तां स्मारयति, लोकवदित्यादिना । तस्मात् प्रकारान्तररूपोऽभिविधिस्तावत्प्रतीक्षते । यावद्योग्यमापन्ना भावना अन्यानपेक्षिणीत्यनेन दर्शितमिति वेदितव्यमिति.

**Colophon:**

इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचिते न्यायरत्नमालायामङ्गनिर्णये पञ्चमः परिच्छेदः ॥

भुवनत्रयविख्यातः श्रीमद्यज्ञात्मनन्दनः ।
तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः ॥
मीमांसाब्धिं चाकुलं चोद्यनक्रैः मन्दप्रज्ञैर्दुर्विगाह्यं विगाह्य ।
भट्टाचार्यैराहृतैर्न्यायरत्नैः मालां कांचित् कल्पयामास धीरः ॥

---

R. No. **1391.**

Paper. $8\frac{4}{8} \times 5\frac{5}{8}$ inches. Foll. 23. Lines, 8 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Śivarāma Śāstri of Trichinopoly.

(*a*) **आत्मानात्मविवेचनम्.**

ĀTMĀNĀTMAVIVĒCANAM.

Foll. 1*a*—10*a*. Fol. 10*b* is left blank.

This work investigates into the nature of the soul and matter and comes to the conclusion that the individual self is identical with the Supreme Brahman. By Mahēśvarānandasarasvatī, a disciple of Puruṣōttamānandasarasvatī.

Complete.

**Beginning:**

अथात्मानात्मस्वरूपं विभज्य प्रदर्श्यते—तत्र प्रथमतः सुखप्रतिपत्त्यर्थमनात्मस्वरूपमुच्यते। अनात्मा त्रिविधः स्थूलसूक्ष्मकारणभेदेन । तत्र स्थूलशरीरं नाम पञ्चीकृतपञ्चमहाभूतकार्यं करचरणाद्यनेकावयवविशिष्टं कर्मणा

संपादितं जीवस्य सुखदुःखानुभवयोग्यायतनमुच्यते। इदमेव स्थूलशरीरम्.

**End:**

सर्वत्र परिपूर्णेन महाकाशेनैकीभूतो भवति; तद्वत् प्रत्यगात्मापि स्थूलसूक्ष्मकारणशरीरत्रयोपाधिविलये सति सर्वत्र परिपूर्णेन सच्चिदानन्दलक्षणेन ब्रह्मणैकीभूतो भवति, सच्चिदानन्दलक्षणं ब्रह्मैव भवतीत्यर्थः। ब्रह्म वेद ब्रह्मैव भवति, ब्रह्मैव सन् ब्रह्माप्येति, ब्रह्मविदाप्नोति परमित्यादिश्रुतेः। तस्मान्मुमुक्षुभिः ब्रह्मात्मनोः श्रुतिप्रतिपादितैक्यमनुज्ञायताम्।

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्पुरुषोत्तमानन्दसरस्वतीचरणारविन्दशिष्यमहेश्वरानन्दसरस्वतीविरचितमात्मानात्मविवेचनं सम्पूर्णम्॥

---

(*b*) पञ्चीकरणम्.

PAÑCĪKARAṆAM.

Foll. 11*a*—23*b*.

Similar to the work described under No. 4636 of the D.C.S. MSS., Vol. IX.

Incomplete.

**Beginning:**

तमहं रामकृष्णाख्यशुद्धं सच्चित्सुखात्मकम्।
नमस्करोमि श्रुत्युक्तं तत्पदप्राप्तिवाञ्छया॥
वेदान्तग्रन्थतात्पर्यग्रहणासक्तचेतसाम्।
ब्रह्मतत्त्वं स्फुटीकर्तुं पञ्चीकरणमुच्यते॥
अनिर्देश्यमपि ब्रह्म अध्यारोपापवादतः।
निर्देश्यं श्रुत्यवष्टम्भाच्छक्यतेऽस्मात्प्रयासतः॥
अध्यारोपक्रमं वक्ष्ये मन्दबुद्ध्यनुसारतः।
केनोपायेन मन्दानां ब्रह्मारोहं भवेन्मनः॥

पञ्चविंशतिकोष्ठानि तदीशाने तु दण्डवत् ।
पञ्च कोष्ठान् लिखेत्तत्र पुच्छं प्रथममुच्यते ॥

पञ्चीकरणं नाम आत्मानात्मविवेकः कथ्यते । आत्मा स्थूलसूक्ष्मकारण-शरीरेभ्यो व्यतिरिक्तः अवस्थात्रयसाक्षी पञ्चकोशव्यतिरिक्तः ।

**End:**

वायोरंशं पृथिवीसंयोगात् धनञ्जयवायुः पृथिव्यामुपसंहरति । अग्न्यंशमाकाशसंयोगात् सङ्गमाकाशे उपसंहरति । अग्नेरंशं वायुसंयोगादालस्यं वायावुपसंहरति । अग्निः स्वांशं निद्रा अग्नावुपसंहरति ।

---

R. No. **1392.**

**Paper.** 8⅝ × 5½ inches Foll. 30. Lines, 8 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Śivarāma Śāstri of Trichinopoly.

**गीताप्रकाशिका.**

GĪTĀPRAKĀŚIKĀ.

This work gives the benefits arising from a study of the eighteen Adhyāyas of the Bhagavadgītā with illustrative stories for some of them. It forms the Adhyāyas eleven to fifteen of the Vāyurahasya and is introduced in a conversation between Vāyu and Garuḍa.

Complete.

**Beginning:**

प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥

श्रीगरुडः—

मातरिश्वन् प्रवक्ष्यामि अध्यायानां पृथक् पृथक् ।
फलं तत्र श‍ृणुष्वाद्य क्रमशस्त्वं समाहितः ॥

अन्तरिक्षात्परं नास्ति यथा नारायणात्परम् ।
परमाणोः परं नास्ति गीतार्थानां परोऽस्ति च ॥

* * * *

तस्यास्संक्षेपतो वक्ष्ये गीतायाः फलमुत्तमम् ।
यावदृष्टा मया तावत्तथापि त्वं शृणु प्रभो ॥
गीता गीतेति यो ब्रूयात्क्षुधाप्रस्खलनादिषु ।
विष्णुलोकमवाप्नोति स मुक्तो बहुपातकैः ॥
यो (यस्मिन्) विषादं करोत्यध्याः(ति स)व्यसाची रणादिषु ।
तस्याध्यायस्य पठतः शृणु त्वं पुण्यमुत्तमम् ॥
अश्वमेधशतैर्यस्तु लभते चेत्तदा क्षणैः ।
तत्फलं लभते मर्त्यः पाठकस्य दिने दिने ॥
यस्साङ्ख्ययोगमध्यायं पठते द्विजसत्तमः ।
अग्निष्टोमस्य यज्ञस्य फलं गच्छेद्दिने दिने ॥
ज्ञानयोगं पठेद्यस्तु सततं द्विजपुङ्गवः ।
उषित्वा स हरेर्लोके बहुकालमनेकशः ॥

*　　*　　*

ज्येष्ठः प्रियव्रतः प्रोक्तः कनिष्ठोत्तानपादकः ।
वर्धमानौ कृतौ पुत्रावुभावपि परस्परौ ॥
भ्रातरौ प्रेमतो भावात् ख्यातौ लोके बभूवतुः ।
षट्सप्तवार्षिकौ तौ तु कुमारौ स्नेहसम्मतौ ॥

*　　*　　*

**Colophon :**

इति वायुरहस्ये गरुडवायुसंवादे गीताप्रकाशिकायां सप्तमाध्याय-फलनिरूपणं नाम एकादशोऽध्यायः ॥

**End :**

एतत्ते कथितं वायो पुण्यमाख्यानमुत्तमम् ।
मया समस्तपापघ्नं सर्वपुण्यप्रदं शुभम् ॥
य इदं पठते नित्यं शृणुयाद्वा समासतः ।
संसाराब्धिं समुत्तीर्य याति विष्णोः परं पदम् ॥

**Colophon:**

इति श्रीवायुरहस्ये श्रीगरुडवायुसंवादे गीताप्रकाशिकायां चरमश्लोकफलनिरूपणं नाम पञ्चदशोऽध्यायः ॥

---

R. No. **1393.**

Paper. $8\frac{3}{4} \times 5\frac{1}{2}$ inches. Foll. 38. Lines, 8 in a page. Grantha. Good.

Transcribed in 1914-15 from a palm-leaf MS. of M.R.Ry. Śivarāma Śāstri of Trichinopoly.

(*a*) अज्ञानस्वरूपम्.

AJÑĀNASVARŪPAM.

Foll. 1*a*—15*a*. Foll. 15*b* and 16 are left blank.

In this work the author investigates the nature of nescience or ignorance, which is the cause of all bondage in the phenomenal world, and says that it can be removed only by the realization of the Brahman.

Incomplete.

**Beginning:**

शुक्लाम्बरधरं विष्णुं ( . . . ) सर्वविघ्नोपशान्तये ॥

सर्गस्थितिप्रलयहेतुमचिन्त्यशक्तिं
विश्वेश्वरं विदितविश्वमनन्तमूर्तिम् ।
निर्मुक्तबन्धनमपारसुखाम्बुराशिं
श्रीवल्लभं विमलबोधघनं नमामि ॥
जननमरणहेतुर्नाशयत्यात्मतत्त्वं
परमकरुणया मे बोधयामास सोऽयम् ।
निखिलभुवनवन्द्यं नित्यमादेहपातात्
परमसुखमिदं तत्पादपद्मं प्रपद्ये ॥
यदज्ञानप्रभावेण दृश्यते सकलं जगत् ।
आत्मा वै स्वख . . . . . . . . ॥

यज्ज्ञानालयमाप्नोति तस्मै ज्ञानात्मने नमः ।
यदज्ञानेन संसारः(रं) प्राणिनां(नो) यन्ति सारतः ॥
मुक्तिर्भवेत्तदज्ञानस्वरूपं वर्ण्यते स्फुटम् ।
चित्तस्य शुद्धये कर्म नहि वस्तूपलब्धये ॥
वस्तुसिद्धिर्विचारेण न किञ्चित् कर्मकोटिभिः ।
कषायपक्ति(वन्ति) कर्माणि ज्ञानं तु परमा गतिः ॥
कषायं कर्मभिः पक्के ततो ज्ञानं प्रवर्तते ।
अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना ॥

**End:**

अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपितम् ।
चर्मावबद्धं दुर्गन्धं पूर्णं मूत्रपुरीषयोः ॥
जराशोकसमाविष्टं रोगायतमशाश्वतम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥

---

## (*b*) अद्वैतबोधप्रकरणम्.

## ADVAITABŌDHAPRAKARAṆAM.

Grantha and Tamil.

Foll. 17*a*—38*a*. Fol. 38*b* is left blank.

A treatise on the Advaita school of the Vēdānta showing the unreality of this phenomenal world. It is in the form of a reply by a Guru to the questions put to him by his disciple.

Complete.

ஶிஷ்ய:—ஸ்வாமின்—பாரும் ஹே குரோ இந்த கதை த்ருஷ்டாந்தம் சொன்னீர். அப்படி தார்ஷ்டாந்திகத்திலே ராஜாவாவதார். யாத்ரியாவதார் - இதுவெல்லாம் கேழ்க்கவேணுமென்று இச்சிக்கிறேன். இதை தத்வமாய் சொல்லுமென்று ஶிஷ்யன் கேட்டான்.

வஸிஷ்டர் சொல்லுகிறார்—

श्रृणु पूर्वोदितो ज्ञानी बाल इत्यत्र वर्णितः ।
श्रुतिर्धात्रीति कथिता ह्रीश्वरप्रतिपादिका ॥
राजा वन्ध्यासुतः प्रोक्तो मायाकल्पित ईश्वरः ।
विरिञ्चिविष्णुरुद्राख्यदेहास्त्रिगुणमूर्तयः ॥
ब्रह्माख्यपीतदेहस्थः सोऽसृजत्रिजगद्गुरुः ।
यत्रेमे वितता लोका लोकेशाश्च चतुर्दश ॥
वनोपवनमालाश्च यत्रोद्यानपरम्परा ।
क्रीडाशिखरिणो यत्र सह्यमन्दरमेरवः ॥
शीतोष्णदीप्तिचन्द्राकौं दीपौ यत्रानिलाक्षतौ ।
सूर्यांशुकवदालोकास्तरङ्गोत्तुङ्गमौक्तिकाः ॥
वहन्त्यस्सरितो यत्र समुक्तावलयश्चलाः ।
इक्षुक्षीरादिसलिला मणिरत्नबिसाङ्कुराः ॥
और्वानलाम्बुजा यत्र वाप्यस्सप्त महार्णवाः ॥

**End :**

अध्यारोपमिमं सम्यक् परामृश्राति(श्यतु) यस्सुधीः ।
उपेक्ष्य मायिकं तस्यास्सोऽपवादमपेक्षते ॥

இந்த அத்யாரோபப்ரகரணத்தை யாதாமொரு விசாரு நன்றாய் பராமர்சித்துப்பார்க்கிறானோ அவன் இத்தனை ஜகத்தும் ஸகலஸம்ஸாரமும் எல்லாம் மாயாமயம் மித்யை, தோணுகிறதுமாத்திரம் ஸ்வப்னம்போலே ப்ராந்தியினாலென்று அறிந்து இத்தை பரமார்த்தம்போலே ஸத்யமாய் எண்ணாமல் இது எப்படிபோமென்று அதுக்கு அபவாதத்தை இச்சிப்பன்.

**Colophon :**

इत्यध्यारोपप्रकरणं समाप्तम् ॥

अद्वैतबोधप्रकरणम् ॥

R. No. **1394.**

Paper. $8\frac{4}{8} \times 5\frac{5}{8}$ inches. Foll. 46. Lines, 8 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R.Ry. Śivarāma Śāstri of Trichinopoly.

(*a*) ब्रह्मसूत्रवृत्तिः.

BRAHMASŪTRAVṚTTIḤ.

Foll. 1*a*—26*a*. Fol. 26*b* is left blank.

A brief commentary on the Brahmasūtras of Vyāsa written in accordance with the Advaita school of the Vēdānta.

Begins with the Īkṣatyadhikaraṇa (I–1–5) and breaks off in the Pramitādhikarṇa (I–3–8).

**Beginning:**

ईक्षतेर्नाशब्दमित्यत्र सदेव सोम्येदमग्र आसीत् तदैक्षतेत्यादिना सच्छब्दवाच्यस्य ईक्षितृत्वश्रवणात् अशब्दं शब्देन वेदेनागम्यं प्रधानं जगत्कारणं न भवतीति ब्रह्मणो जगत्कर्तृत्वमुक्तम्। गौणश्चेन्नात्मशब्दादित्यत्र प्रधानस्येक्षितृत्वमौपचारिकमित्युक्तं चेदात्मशब्देन ।

**End:**

अपि च स्मर्यते—

यदादित्यगतं तेजः जगत् भासयतेऽखिलमिति भगवद्गीतासु ब्रह्मणः सूर्याद्यभास्यत्वं स्मर्यत इत्युक्तम्, शब्दादेव प्रामत इत्यत्र अङ्गुष्ठमात्रः पुरुषः ज्योतिरिवाधूमक इति वाक्येन हृदयेऽङ्गुष्ठमात्रत्वेन प्रमितः प्रतिपन्नः प्रत्यगभिन्नः परमात्मैव न तु जीवः कुतः शब्दादेव, ईशानो भूतभव्यस्येति सकलजगदीशितृत्वप्रतिपादकेशानशब्दादेवेत्यङ्गुष्ठमात्रजीवानुवादेन ब्रह्माभेदो बोध्यत इत्युक्तम् । हृद्यपेक्षया तु मनुष्याधिकारत्वादित्यत्र.

---

(*b*) ब्रह्मसूत्रभाष्यव्याख्या—रत्नप्रभा.

BRAHMASŪTRABHĀṢYAVYĀKHYĀ—RATNAPRABHĀ.

Foll. 27*a*—46*b*.

Same work as that described under No. 4679 of the D.C.S. MSS.

Contains only the Ārambhaṇādhikaraṇa (II-1-6).

---

R. No. **1395.**

Paper. $9\frac{3}{4} \times 5\frac{1}{2}$ inches. Foll. 8. Lines, 10 in a page. Dēvanāgarī. Good.

Transcribed in 1914-15 from a MS. of M.R.Ry. Sōmanātha-Śāstri of Masulipatam.

एकवाक्यताविचारः.

ĒKAVĀKYATĀVICĀRAḤ.

A discussion between the logician of the Nyāya philosophy and the grammarian as to whether the presence of more than one finite verb in a sentence will break the unity of judgment contained in it.

This appears to be the same work as that described under No. 1940 of Doctor Rajendra Lal Mitra's Notices of Sanskrit MSS., wherein the author is stated to be Acalōpādhyāya.

Complete.

**Beginning:**

अथ किमिदं वाक्यं नाम, एकतिङ् वाक्यमिति भाष्यात् एकतिङन्तार्थ-मुख्यविशेष्यकबोधजनकपदसमूहो वाक्यमिति वैयाकरणाः । तेन पचति भवतीत्यादौ पश्य मृगो धावतीत्यादौ च क्रियापदस्यानेकत्वेऽपि नैकवाक्यताया व्याघातः । नहि क्रियाविनिर्मुक्तं वाक्यमस्तीति भाष्यात् अस्तिर्भवन्तीपरः प्रथमपुरुष इति कात्यायनस्मरणाच्च, सर्वत्र समुचितक्रियापदाध्याहारः ।

**End:**

सङ्ख्या कालातिरिक्ताख्यातार्थो हि भावना । भावनान्वयिनि संख्यान्वय इति नियमात् । क्वचिद्विशेष्यस्य क्वचिद्विशेषणस्य परामर्शात्, तात्पर्यविषयपरामर्शकत्वं तच्छब्दनियतम् । परं तु पदार्थतावच्छेदकरूपविशेषणस्य क्वचिदपि न परामर्शः इति सिद्धान्तनैयायिकमतम् ॥

**Colophon:**

इति एकवाक्यताविचारः संपूर्णः ॥

---

R. No. **1396.**

Paper. $9\frac{5}{8} \times 6$ inches. Foll. 18. Lines, 9 in a page. Grantha. Good.

Transcribed in 1914–15 from a palm-leaf MS. of M.R Ry. Rājagurukkaḻ of Rāmēśvaram.

लक्ष्मीनरसिंहपूजाविधिः.

LAKṢMĪNARASIṀHAPŪJĀVIDHIḤ.

Similar to the work described under No. 8690 of the D.C.S. MSS., Vol. XVI.

Contains the Aṅgapūjā, Āvaraṇapūjā and Nṛsiṁhāṣṭōttaraśatanāmāvali. Complete.

**Beginning:**

आचम्य प्राणानायम्य—

शुक्लाम्बरधरं . . . . . . . सर्वविघ्नोपशान्तये ॥

ममोपात्त—प्रीत्यर्थं शुभे शोभने मुहूर्ते चतुर्दश्यां शुभतिथौ ममात्मनः आखिलपापक्षयपूर्वकशत्रुजयसुखधनावाप्तिद्वारा श्रीनरसिंहप्रीत्यर्थमाचरितस्य श्रीलक्ष्मीनरसिंहपूजां ध्यानावाहनादिषोडशोपचारपूजामद्य करिष्ये वैशाखशुक्लचतुर्दश्यां प्रदोषव्या . . . . . श्रीनरसिंहपूजां च करिष्ये.

**End:**

जीवैस्तु परिभूतस्य मोहदुःखगतस्य मे ।
करावलम्बनं देहि शेषशायिन् जगत्पते ॥
श्रीनृसिंहरमाकान्त भक्तानां भवनाशन ।
क्षीराम्बुनिधिवासिन् त्वं चक्रपाणे जनार्दन ॥
व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ।
गतं पापं गतं दुःखं गतं दारिद्यनाशनम् ॥

त्वत्पादाम्भो (रुहयुगे): मम भक्तिः नित्यं प्रसीद मम जनार्दन ।
मन्त्रहीनम्.

**Colophon:**

इति लक्ष्मीनृसिंहपूजाविधिस्समाप्तः ॥

---

R. No. **1397.**

Paper. 9⅝ × 6 inches. Foll 42. Lines, 10 in a page. Dēvanāgarī. Good.

Transcribed in 1914–15 from a MS. of M.R.Ry. Sōmanātha Śāstri of Challapalli.

वाक्यदीपिका.

VĀKYADĪPIKĀ.

A commentary on the Ēkavākyatāvicāra described under R. No. 1395 *ante*: by Hariyaśōmiśra, patronized by Udayasiṁharāya.

Complete.

**Beginning:**

सुप्तिङन्तचयो वाक्यमिति प्रमाणानुसारेण सुबन्तचयत्वे सति तिङन्तचयत्वमिति, तस्य प्रत्येकं वा सुबन्तचयत्वादेर्वा लक्षणत्वे परस्परमव्याप्तिः। पदसमूहमित्यस्य गौरश्वः पुरुषो हस्तीत्यादावतिव्याप्तिरित्याशयेन पृच्छति—अथेति। इदं लोकप्रसिद्धं वाक्यम्। वाक्यपदवाच्यं किं जिज्ञासितम्। तथाच लोके प्रसिद्धं वाक्यपदवाच्यं जिज्ञासाविषयीभूतमित्यन्वयबोधः। नामेति वाक्यालङ्कारे। एकतिङ्वाक्यमिति भाष्यादिति। एकत्वे सति तिङ्त्वं वाक्यत्वमित्युक्ते पचतीत्यस्यापि वाक्यत्वापत्तिः। एकं तिङ् यस्मिन्निति बहुव्रीह्याश्रयणे एकतिङ्घटितपदसमुदायत्वं वाक्यत्वमिति पर्यवसन्नम्। पचति भवतीत्यादावव्याप्तमित्याशयेन तदर्थमाह एकतिङन्तेनेति।

**End:**

ननु तच्छब्दविशेषणपरामर्शेति। घटोऽयं तज्जातिरित्यादौ तच्छब्देन घटत्वपरामर्शः स्यादित्यत आह—परन्त्विति। पदार्थतावच्छेदकरूपविशेष-

णस्य पदशक्यतावच्छेदकरूपविशेषणस्य नातिव्याप्तिः पटोलपत्रमित्यादौ पटालादिपदस्य पटोलादिसम्बन्धिनि लक्षणास्वीकारे पटोलादेः पदार्थतावच्छेदकत्वेऽपि तत्परामर्शानुपपत्तिरिति भावः ॥

**Colophon:**

एवं लक्षणतत्त्वव्यापकाकाचिद्या(?)तत्प्रयुक्तदृश्याश्रयकालपूर्वकत्वाभावकशुद्धचिज्ज्ञाननिरस्तविपरीतभावनीभूतश्रीमदुदयींसहप्रभुलब्धजीवकहरियशोमिश्रनिर्मितवाक्यदीपिका समाप्तिमगमत् ॥

वाक्यदीपिका समाप्ता ॥

---

R. No. **1398.**

Paper. 8¾ × 5⅝ inches. Foll. 22. Lines, 8 in a page. Grantha. Good.

Transcribed in 1914–15 from an ill-arranged palm-leaf MS. of M.R.Ry. Rājāgurukkaḷ of Rāmēśvaram.

रामेश्वरविवाहोपाख्यानम्.

RĀMĒŚVARAVIVĀHŌPĀKHYĀNAM.

A poem describing the marriage said to have taken place between Rāmanāthasvāmin, a form of Śiva worshipped in Rāmēśvaram, and Parvatavardhanī who was born as the daughter of the Gandamādhana mountain. Reference is made herein to King Muddurāmaliṅga of Rāmnad and to Rāmanāthayati: by Raghunāthakavi.

Contains the second Sarga and the first Adhyāya complete. The second Adhyāya is incomplete. There is apparently some confusion in the arrangement of the chapters.

**Beginning:**

अथाद्रिराजस्सह विष्णुवेधसा संभोजयामास शिवं शिवामपि ।
विचित्रनानाविध अन्नराश्यै(?)रनेकशाकैरपि भक्ष्यभोज्यैः ॥
सशर्करान्नैरपि पायसान्नैर्नानाविधैः पक्वफलादिकैश्च ।
क्षीराज्यखण्डैर्मधुनाक्तभोज्यैः पानीयशीतोदकपानकैश्च ॥

* * * *

कृत्वा तु सर्वेऽपि मुदादिदेवं निवेश्य चान्तर्गृहमादिदेवीम् ।
एवं च कृत्वा परमेश्वरस्य देव्याश्च कल्याणमहोत्सवं मुदा ॥
अथापरेद्युर्दिवसे च शुक्रे वारे बृहन्नायकधर्मकर्त्रा(र्ता) ।
देव्यालये हेमध्वजस्समीपे कृत्वासितदृढशिलैस्सहसा विमानम् ॥

* * * *

इदं विवाहं रघुनायकस्य देव्याश्च चाख्यानमथोपशृण्वतः ।
पुत्रैश्च पौत्रैश्च कलत्रमित्रैर्विचित्रभोगैस्सकलैस्स एधते ॥

**Colophon :**

इति श्रीरघुनाथकविविरचिते रामेश्वरविवाहोपाख्याने द्वितीयस्सर्गः ॥

मन्दं चलन्नुचितभूषणभूषिताङ्गः समाययौ चात्मविवाहमण्टपम् ।
सचित्ररत्नाञ्चितसैंह आसने सहाम्बया तत्र निविष्ट आद्यः ॥

* * * *

स विष्णुश्रीभ्यां सहपत्निकोऽद्रिः सभृङ्गराजोदकधारपूर्वकैः ।
सङ्गृह्य पाणिं सहजाम्बिकायाः ददौ शिवस्याद्भुतहस्तयोर्मुदा ॥

* * * *

शिवं तया वासनमाससाद निवेद्य नीराजनधूपदीपैः ।
एवं समाराधितदेवबृन्दैः विप्रादिवर्णैरपि सेव्यमानः ॥
सहाम्बया पर्वतवर्धयिन्या धाम प्रदक्षिणवशात्प्रविवेश गेहम् ।

**Colophon :**

इति श्रीरघुनाथकविविरचिते रामेश्वरविवाहोपाख्याने प्रथमोऽध्यायस्समाप्तः ।

सोऽयं प्रविश्य भवनं जगदीश्वरोऽथ माङ्गल्यपूर्वविहितानि चकार देवः ।
विप्रैः स्वकैर्मङ्गलवाद्यघोषैः कृत्वाङ्कुरार्पणसुरक्षणकाशियात्राम् ॥

* * * *

देवादिधर्मपरिपालनदीक्षितेन श्रीरामनाथयतिना बृहन्नायकेन ।
संसेवितश्च निजसेतुभुवाधिपेन श्रीमुद्दुरामलिङ्गभुविपालसुशेखरेण ॥

संसेवितश्च रघुनाथकृतोपचारैः श्रीरामनाथोऽथ प्रसन्नचित्तः ।
तं वीक्ष्य देवी निजभावपूरणं ननाम सा नान्यमना मनस्विनी ॥

**End:**

श्रीगन्धमादनगिरिस्सह बन्धुवर्गैरालोच्य सेतुपतिना सहजाविवाहम् ।
कर्तुं प्रभोस्तु रघुनायकनायकस्य श्रीरामनाथयतिना सह ब्राह्मणैश्च ॥
गत्वा तां हिमशैलराजतनयामापृच्छ्य गन्धाचलः
श्रीरामेण कृतं तटाकममलं श्रीरामतीर्थाभिधम् ।
तस्याश्चोत्तरभागदेशविमले चोद्यानवाटीवृते
तस्मिन्नाश्रममाकरोच्च सहसा दिव्यैर्लताभिर्गृहम् ॥
शृङ्गाग्रस्वर्णविलसत्करिपोतमग्र्यं ग्रामप्रदक्षिणमहोऽत्र च कारयित्वा ।
वैप्रं गृह्यविभूतिभूषितमहारुद्राक्षमालान्वितः.

---

## R. No. 1399.

Paper. $11\frac{1}{8} \times 8\frac{5}{8}$ inches. Foll. 93. Lines, 20 in a page. Dēvanāgarī. Good.

Restored in 1914-15 from the Library MS. described under R. No. 223(*a*) *ante*.

### तत्त्वचिन्तामणिदीधितिव्याख्या.
### TATTVACINTĀMAṆIDĪDHITIVYĀKHYĀ.

Same work as that described under R. No. 223(*a*) *ante*.

Contains the Pratyakṣa incomplete.

---

## R. No. 1400.

Paper. $11 \times 8\frac{5}{8}$ inches. Foll. 117. Lines, 20 in a page. Telugu. Good.

Restored in 1914-15 from the Library MS. which has been already described under R. No. 412 *ante*.

लघुस्मार्तपद्धतिविवेचनिका.

LAGHUSMĀRTAPADDHATIVIVĒCANIKĀ.

Breaks off in the Arghyavismṛtinirṇaya.

---

## R. No. 1401.

Paper. 11¼ × 8⅝ inches. Foll. 266. Lines, 19 in a page. Telugu. Good.

Restored in 1914-15 from the Library MS. which has been already described under R. No. 1170 *ante*.

नामलिङ्गानुशासनव्याख्या.

NĀMALIṄGĀNUŚĀSANAVYĀKHYĀ.

By Bommakaṇṭi Appayasūri.

Wants the first six pages.

---

## R. No. 1402.

Śrītāla. 11¾ × 2¼ inches. Foll. 265. Lines, 9 in a page. Grantha. Fair.

Purchased in 1914-15 from M.R.Ry. Jānakirāma Lāla of Triplicane.

(*a*) अनर्घराघवम्.

ANARGHARĀGHAVAM.

Foll. 1*a*—82*b*.

By Murāri. Same work as that described under R. No. 132(*b*) *ante*.

Complete.

---

(*b*) अनर्घराघवव्याख्या—विक्रमीया.

ANARGHARĀGHAVAVYĀKHYĀ: VIKRAMĪYĀ.

Foll. 83*a*—265*b*.

By Mānavikrama Same work as that described under R. No. 132(*a*) *ante*.

Breaks off in the forty-seventh stanza of the sixth Aṅka.

## R. No. **1403.**

Palm-leaf. 17¾ × 1½ inches. Foll. 156. Lines, 8 in a page. Telugu. Injured.

Purchased in 1914–15 from M.R.Ry. S. Gōpālācāriyar of Villiyambākkam.

The first 2 leaves are broken in the beginning.

वेदान्तसिद्धान्तसारः.

VĒDĀNTASIDDHĀNTASĀRAḤ.

A treatise containing the leading principles of the Advaita school of the Vēdānta and apparently based upon the Bhāmatī of Vācaspatimiśra and the Tattvadīpana of Akhaṇḍānandamuni: by Umāmahēśvara of Vellāla family.

Contains the first Paricchēda entitled Jīvēśvarabhēdabhaṅga complete and breaks off in the course of the second Paricchēda.

**Beginning:**

. . . . पदाम्बुजं भज निजात्मबोधक्षर-
न्मरन्दशरजर्झरीकृतनतार्तिदावानलम् ।
. . . . . . . . . . . प्रकाश्याखिला-
नाचार्यं त्रिजगद्गुरुं प्रतिमुहुर्वाचस्पतिं तं नुमः ॥
त्यक्तुं नैव सुराद्दतः प्रभवति स्वस्यापि यो जीवति ।

* * * *

. . . . . . . . चन्द्रमा इव पयः पयोनिधेः ॥
पातिव्रतीवास्य शरीरधारिणी
तिम्माम्बिकाख्या सहधर्मचारिणी ।

* * * *

. . . . . . . . . . . . सेन पुष्टा
हृष्टा विशिष्टा जगति प्रतिष्ठाः ।

**End:**

द्वैतमद्वैतं न पश्यति । यथा दिवसो रात्रिं न पश्यति, यथा रात्रिः सूर्यन्न पश्यति परस्परविरोधात् । सूर्यस्थानीयं सदोदितं ज्ञानं सदाप्रकाशरूपम्, मायागुणाः सदा अज्ञानान्धकारस्थानीयाः । एवं ज्ञातव्यम् ॥

**Colophon:**

इति श्रीज्ञानबोधे श्रीगुरुशिष्यसंवादे ज्ञानप्रबोधमञ्जरी संपूर्णा ॥

---

(*h*) मानसिकान्तरस्नानम्.

MĀNASIKĀNTARASNĀNAM.

Fol. 43*a*. Fol. 43*b* contains a few stanzas of Śaṅkarācārya-śiṣyadhyānaślōka.

On the manner of taking a bath mentally, which is intended to be resorted to by those who are unable to bathe in water owing to illness or for other reasons.

Complete.

**Beginning:**

आन्तरस्नानमत्यन्तरहस्यमपि पार्वति ।
सरित्रयमनुस्मृत्य चरणत्रयमध्यमः ॥
स्रवन्तरसच्चिदानन्दप्रवाहं भावगोचरम् ।
त्रिवेणीसङ्गमो यत्र तीर्थराजस्स उच्यते ॥
तत्र स्नानं प्रकुर्वीत सर्वपापैः प्रमुच्यते ।

**End:**

ब्रह्मज्ञानेन मुच्यन्ते प्रयागमरणेन वा ।
अथवा स्नानमात्रेण गोमयां(त्यां?) कृष्णसन्निधौ ॥

**Colophon:**

इति मानसिकान्तरस्नानं संपूर्णम् ॥

---

(*i*) दत्तात्रेयस्तोत्रम्.

DATTĀTRĒYASTŌTRAM.

Fol. 44.

In praise of Dattātrēya, who is considered to be an incarnation of God Viṣṇu : by Śaṅkarācārya.

Complete.

**Beginning:**

मूलाधारे वारिजपत्रे चतुरश्रं वंशंषसं वर्णविशालं सुविशालम् ।
रक्तं वर्णं श्रीगणनाथं भगवन्तं दत्तात्रेयं श्रीपदपद्मं प्रणतोऽस्मि ॥

**End:**

हंसो गणेशो विधिरेष हंसो हंसो हरिर्हंसमयश्च शम्भुः ।
हंसो ह जीवः परमेकहंसो हंसो हरिर्हंसमयश्च हंसः ॥

**Colophon:**

इति श्रीशङ्कराचार्यविरचितं दत्तात्रेयस्तोत्रं संपूर्णम् ॥

---

(*j*) मनीषापञ्चकम्.

MANĪṢĀPAÑCAKAM.

Foll. 44*b*—45*b*.

By Śaṅkarācārya. Same work as that described under No. 4705 of the D.C.S. MSS., Vol. IX.

Complete.

---

(*k*) दक्षिणामूर्त्यष्टकम्.

DAKṢIṆĀMŪRTYAṢṬAKAM.

Foll. 46*a*—47*a*.

By Śaṅkarācārya. Same work as that described under R. No. 118(*b*) *ante*.

Complete.

---

(*l*) योगतारावली.

YŌGATĀRĀVALĪ.

Foll. 47*b*—49*a*. Fol. 49*b* is left blank.

By Gōvindabhagavatpūjyapāda. Same work as that described under No. 4356 of the D.C.S. MSS., Vol. IX.

Complete.

(*m*) दत्तात्रेयगीता.

DATTĀTRĒYAGĪTĀ.

Fol. 50.

A short treatise bearing on the Advaita-Vēdānta

Complete.

**Beginning :**

दत्तात्रेय उवाच—

चिन्मयं व्यापितं सर्वमाकाशं जगतीश्वरम् ।
निर्विकल्पं स्वयं ब्रह्म तस्याऽहं पञ्चमाश्रमम् ॥
निराकारं निराभासं निरालम्बं निरञ्जनम् ।
निःशब्दमुच्यते ब्रह्म तस्याऽहं पञ्चमाश्रमम् ॥

**End:**

. . . . ब्रह्म मनोरूपो जगदेतच्चराचरम् ।
निर्विकल्पं स्वयं ब्रह्म तस्याहं पञ्चमाश्रमम् ॥
. . . . . . . . . ब्रह्मचारी कथं भवेत् ।
गृही वा वानप्रस्थो वा यती योगं विना न हि ॥

**Colophon:**

इति दत्तात्रेयगीता समाप्ता ॥

---

(*n*) आत्मपूजा.

ĀTMAPŪJĀ.

Foll. 50*b*—51*a*.

By Śaṅkarācārya. Same work as that described under No. 8611 of the D.C.S. MSS., Vol XVI, but with an additional stanza in the beginning and with a different end as given below.

Complete.

**Beginning:**

आनन्दे सच्चिदानन्दे निर्विकल्पैकरूपिणे ।
स्थितिद्वितीयभावे वै कथं पूजा विधीयते ॥
पूर्णस्यावाहनं ( . . ) शुद्धस्याचमनं कुतः ॥

**End:**

नमो देवादिदेवाय पराय परमात्मने ॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं सर्वं महाकल्पाम्बुना यथा ॥

**Colophon:**

इति श्रीमच्छङ्कराचार्यविरचितमात्मपूजाप्रकरणं समाप्तम् ॥

---

(*o*) निर्गुणाष्टकपूजा.

NIRGUṆĀṢṬAKAPŪJĀ.

Fol. 51.

By Śaṅkarācārya. Similar to the work described under No. 8611 of the D.C.S. MSS., Vol. XVI. The beginning is slightly different in this MS.

Complete.

**End:**

त्वमेवाहमहं त्वं च साच्चिन्मात्रवपुर्धरः ।
आवयोरन्तरं भ्रान्तिर्नश्य . . . . वा ॥

**Colophon:**

इति श्रीमच्छङ्कराचार्यविरचितं निर्गुणाष्टकपूजा सम्पूर्णा ॥

---

(*p*) माधवस्तवराजः.

MĀDHAVASTAVARĀJAḤ.

Foll. 52*a*—55*b*.

Same work as that described under No. 10188 of the D.C.S. MSS., Vol. XVIII.

Complete.

---

(*q*) आत्ममानसपूजा.

ĀTMAMĀNASAPŪJĀ.

Foll. 55*b*—56*a*.

By Śaṅkarācārya. Same work as that described under No. 8609 of the D.C.S. MSS., Vol. XVI.

Complete.

**Colophon:**

इति श्रीमच्छङ्कराचार्यविरचितं(ता)मानसपूजा समाप्ता ॥

---

(*r*) परमानन्ददीपिका.

PARAMĀNANDADĪPIKĀ.

Foll. 56*b*—60*a*.

By Śaṅkarācārya This gives a brief account from the Advaitic standpoint, of the nature of the universe and of the highest truth as also of the means leading to the realisation of the truth.

Wants two stanzas in the beginning; otherwise complete.

**Beginning:**

मातेव पुत्रमनुबोधयति श्रुतिर्हि लोकं समस्तमपि योजयितुं सुखेन ।
तस्माच्छ्रुतेरभिहितार्थमतन्द्रितेन चित्तेन साधयितुमत्र जना यतध्वम् ॥
आदाविदं सकलमेव जगत्सदासीत् कुम्भादिवत्तदनु शक्तियुता(तं)परस्तात् ।
आकाशवायुदहनाम्बुभुवो बभूवुः वातप्रसक्तसलिलादिव वीचिपूरः ॥
सूक्ष्माख्यभूतगतसत्त्वरजस्तमोभिः लिङ्गं शरीरमुदभूदत ईश्वरेच्छा ।
पञ्चीचकार वियदादिकसूक्ष्मभूता ह्यण्डं ह्यभूदत इदं त्विह जीवभोग्यम् ॥

**End:**

आम्नायमस्तकसुसंस्कृतवैभवोऽहं व्योम्नोऽपि पूर्णतरमूर्तिरहं स्थिरोऽहम् ।
सर्वालयोऽहमहमाद्यवभासकोऽहं वागाद्यगोचरसदोदितसौख्यगोऽहम् ॥

**Colophon:**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्भगवच्छङ्कराचार्यविरचिता परमानन्ददीपिका समाप्ता ॥

---

(*s*) आत्मबोधः.

ĀTMABŌDHAḤ.

Foll. 60*a*—64*a*.

By Śaṅkarācārya. Same work as that described under No. 4547 of the D.C.S MSS., Vol. IX.

Complete.

---

(*t*) अपरोक्षानुभूतिः.

APARŌKṢĀNUBHŪTIḤ.

Foll. 64*a*—71*b*.

By Śaṅkarācārya. Same work as that described under No. 4540 of the D.C.S. MSS., Vol. IX.

Complete.

---

(*u*) अष्टावक्रगीता.

AṢṬĀVAKRAGĪTĀ.

Foll. 72*a*—88*b*

By Aṣṭāvakra. Same work as that described under No. 4545 of the D.C.S. MSS., Vol. IX. but without commentary.

Complete.

---

(*v*) आश्रमोपनिषत्.

ĀŚRAMŌPANIṢAD.

Foll. 89*a*—90*b*.

This Upaniṣad deals with the duties to be performed by a twice-born in the diff·rent stages of life.

Complete.

**Beginning:**

अथातश्चत्वार आश्रमाः षोडशभेदा भवन्ति। तत्र ब्रह्मचारि(णः) चतुर्विधा भवन्ति। गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति। य उपनयनादूर्ध्वं त्रिरात्रमक्षारालवणाशी गायत्रीमन्त्रेण स गायत्रोऽष्टाचत्वारिंशद्वर्षाणि वेद ब्रह्मचर्यं चरेत्।

**End:**

शून्यागारे देवगृहवासिनो न तेषां धर्मो नाधर्मो न चानृतं सर्वसहास्सर्वसमास्समलोष्टाश्मकाञ्चनाः। यथोपपन्नं चातुर्वर्ण्यभैक्षाचर्यं चरन्त आत्मानं मोक्षयन्त आत्मानं मोक्षयन्तः॥

**Colophon:**

इति आश्रमोपनिषत् संपूर्णम्(।) ॥

---

(w) शिवमानसपूजा.

ŚIVAMĀNASAPŪJĀ.

Foll. 90*b*—91*b*.

By Śaṅkarācārya. Similar to the work described under No. 8608 of the D.C.S. MSS., Vol. XVI.

Complete.

---

(x) अपराधदशकम्.

APARĀDHADAŚAKAM.

Foll. 91*b*—93*a*.

Same work as that described under No. 10913 of the D.C.S. MSS., Vol. XIX.

Complete.

---

(y) सप्तश्लोकी (भागवत).

SAPTAŚLŌKĪ (BHĀGAVATA).

Fol. 93*a*.

Contains seven stanzas taken from the second Skandha of the Śrī-Bhāgavata which are considered to give the main teachings inculcated in the work.

Complete.

**Beginning:**

ज्ञानं परमगुणं मे यद्विज्ञानसमन्वितम् ।
सरहस्यं तदङ्गं च गृहाण गदितं मया ॥
यावानहं यथाभावो यद्रूपगुणकर्मकः ।
तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् ॥

**End:**

एतन्मतं समातिष्ठ परमेण समाधिना ।
भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥

**Colophon:**

इति श्रीमद्भागवते महापुराणे द्वितायस्कन्धे सप्तश्लोकीभागवतं संपूर्णम् ॥

---

(ङ) सप्तश्लोकी (गीता).

SAPTAŚLŌKĪ (GĪTĀ).

Foll. 93*b*—94*a*.

These seven stanzas are taken from the Bhagavadgītā and inculcate the worship of Lord Kṛṣṇa.

Complete.

**Beginning:**

अस्य श्रीसप्तश्लोकीगितामालामन्त्रस्य श्रीभगवान् वेदव्यास ऋषिः, अनुष्टुप् छन्दः, श्रीकृष्णः परमात्मा देवता । श्रीकृष्णप्रात्यर्थे जपे विनियोगः ।

अथ ध्यानम्—

वसुदेवसुतं देवं (. .) कृष्णं वन्दे जगद्गुरुम् ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।

यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥

**End:**

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।

मामेवैष्यासि युक्त्वैवमात्मानं मत्परायणम् ॥

**Colophon:**

इति भागवते(ती)सप्तश्लोकीगीता समाप्तः(।) ॥

---

(*a*-1) सप्तश्लोकी (रामायणम्).

SAPTAŚLŌKĪ (RĀMĀYAṆAM).

Foll. 94*a*—95*a*.

These seven stanzas give briefly the story of the Rāmāyaṇa.

Complete.

**Beginning :**

वाल्मीकिस्मृतिमन्दरेण मथितं सीतारमासंभवः
सुग्रीवोऽमरभूरुहोऽङ्गदगजस्सौमित्रचन्द्रोदयः ।
वालो(तो)त्पन्नमणिर्विभीषणसुधा पौलस्त्यहालाहलं
श्रीरामायणदुग्धसिन्धुरमलो भूया(त्) स नः श्रेयसे ॥

**End :**

श्रीरामस्य कथासुधां सुमधुरां श्लोकान्वितामुत्तमां
ये शृण्वन्ति पठन्ति च प्रतिदिनं पापौघविध्वंसिनी(म्) ।
श्रीविद्यां बहुपुत्रपौत्रसुखदं भुक्त्वा तु भोगान् चिरान्
ते(तां) यान्ति गतिं परा शु विमलां या योगिनां दुर्लभा ॥

**Colophon :**

इति श्रीवाल्मीकिविरचितं सप्तश्लोकीरामायणं समाप्तम् ॥

Fol. 95*b* is left blank.

---

(*a*-2) व्यासपुत्राष्टकम्.

VYÂSAPUTRĀṢṬAKAM.

Fol. 96.

Same work as that described under R. No 1229(*f*) *ante*.

Complete.

**Colophon :**

इति श्रीव्यासपुत्रशुकेन कृतौ शुकाष्टकं संपूर्णम् ॥

---

(*a*-3) हरिमीडस्तोत्रम्.

HARIMĪḌESTŌTRAM.

Foll. 97*a*—100*b*.

By Śaṅkarācārya. Same work as that described under No. 10472 of the D.C.S. MSS., Vol. XVIII.

Complete.

(*a*-4) योगवासिष्ठसारविवरणम्.

YŌGAVĀSIṢṬHASĀRAVIVARAṆAM.

Foll. 101*a*—158*b*.

A commentary by Mahīdhara on the Yōgavāsiṣṭhasāra, which gives briefly the essence of what is contained in the Yōgavāsiṣṭha, also called Vāsiṣṭharāmāyaṇa which work has been described under No. 1910 of the D.C.S. MSS., Vol IV, Part I.

See also Oxford Catalogue No. 563 on page 232(*b*).

Complete in ten chapters as given below :—

१. वैराग्यबोधनम्.
२. जगन्मिथ्यात्वम्.
३. जीवन्मुक्तलक्षणम्.
४. मनोलयप्रकरणम्.
५. वासनोपशमनम्.
६. आत्ममननम्.
७. मुक्तिनिरूपणम्.
८. आत्मार्चनम्.
९. आत्मनिरूपणम्.
१०. शून्याशून्यप्रकरणम्.

**Beginning:**

लक्ष्मीकान्तं नमस्कृत्य यथामति विरच्यते ।
वासिष्ठसारविवृतिः परोपकृतिकाम्यया ॥
वसिष्ठेन यतीन्द्रेण उपदिष्टं रघूत्तमे ।
सारमुद्धृतवान् कश्चित् ब्रह्मविद्यामहार्णवात् ॥

व्या – तत्रादौ योगवासिष्ठ(सा)राख्यं ग्रन्थमारभिषु(रिप्सु)स्तत्प्रतिपाद्येष्टदेवतानतिरूपं मङ्गलमाचरति—दिक्कालेति ।

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥

व्या—एवंविधाय गुणातीताय तेजसे शान्ताय ब्रह्मरूपाय नमः। तेजःशब्देनात्र ब्रह्मैव न भौतिकं तेजः तस्य वक्ष्यमाणलक्षणानुपपत्तेः। किंभूताय तेजसे दिक्कालादिभिरनवच्छिन्ना नपि नविव्ययता (देशतः कालतः वस्तुतोऽ)परिच्छिन्ना अनन्ता अविनाशिनी चिन्मात्रा ज्ञानघना मूर्तिः स्वरूपं यस्य तस्मै

* * * *

एवमाधिकारिणं निरूप्य सद्गुरुसेवादिकं ब्रह्मज्ञानसाधनं निरूपयति श्लोकत्रयेण ।

यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् ।
तावन्न सद्गुरुं कश्चित् सच्छास्त्रं वापि नो लभेत् ॥
महानुभावसंसर्गात् संसारार्णवलङ्घने ।
युक्तिः संप्राप्यते राम दृढा नौरिव नाविकात् ॥
संसारदीर्घरोगस्य सुविचारमहौषधम् ।
कोऽहं कस्य च संसारो विवेकेन विलीयते ॥

**End:**

यथा प्रतोलिकाशून्य इति । यथा लोके स्तम्भः सङ्कीर्णपुत्रिकःसालभञ्जिका तया असङ्कीर्णः अयुक्तः तेन कारणेन पुत्तलिकाशून्य इति शब्द्यते, स्वयं न सत्येव सा तदभावशब्दाश्रयमात्रात् स्तम्भोऽपि अभावतामापद्यते यथा, तथा ब्रह्म जगदिति कालत्रयाभावरूपं तद्वत् भान्तं प्रतीतं तेन स्वयं जगदसदपि तदभावप्रतीत्याश्रयणात् ब्रह्म शून्यपदं गतं शून्यताप्राप्तम् । वस्तुतस्तु जगान्नि(न्मि)थ्या ब्रह्म सत्यमित्यर्थः । हे सौम्य राम अम्भासि जले वीचिर्न वास्ति नच . . . . वत् प्रतीयते कदाचित्तदपि भानं नास्ति यथा तथा जगत् ब्रह्माणि . . . . . . . . . शून्याशून्यपदं भावाभावरूपं गतं प्राप्तं तस्यैव भावाभाव . . . .

**Colophon:**

इति श्रीयोगवासिष्ठसारविवरणे शून्याशून्यप्रकरणं नाम दशमोऽध्यायः ॥

अश्वत्थदीक्षितन् लिखितम् ॥

---

(*a*-5) योगतत्त्वम्.

YŌGATATTVAM.

Foll. 159*a*—164*b*.

On details connected with the practice of Yōga.

These are stated to have been taught to Brahman by God Viṣṇu.

Incomplete.

**Beginning:**

योगैश्वर्यं च कैवल्यं जायते यत्प्रसादतः ।
तद्वैभवं योगतत्त्वं रामचन्द्रमहं भजे ॥
सह नाववत्विति शान्तिः ।
योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
यच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥
विष्णुर्नाम महायोगी महाभूतो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः ॥
तमाराध्य जगन्नाथं प्रणिपत्य पितामहः ।
पप्रच्छ योगतत्त्वं मे ब्रूहि चाष्टाङ्गसंयुतम् ॥
तमुवाच हृषीकेशो वक्ष्यामि शृणु तत्त्वतः ।

* * *

एभिर्दोषविनिर्मुक्तस्स जीवः केवलो मतः ।
तस्माद्दोषविनाशार्थमुपायं कथयामि ते ॥
योगहीनं कथं ज्ञानं मोक्षदा(दं) भवति ध्रुवम् ।
योगो विज्ञानहीनः स्यान्न क्षमो योगकर्मणि ॥
तस्मात् ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ।
अज्ञानादेव संसारो ज्ञानादेव विमुच्यते ॥

**End:**

मारुतं मरुतां स्थाने यकाराक्षरभासुरम् ।
धारयेत्तत्र . . . . ईश्वरं सर्वतोमुखम् ॥
धारयेत्पञ्चघटिकाद्वायुवत् व्योमगो भवेत् ।
. . . . . योऽस्ति भयं भवति योगिनः ॥
आभ्रूमध्यात्तु मूर्धान्तमाकाशस्थानमुच्यते ।

(*a*-6) तत्त्वबोधः.

TATTVABŌDHAḤ.

Foll. 165*a*—169*b*.

Same work as that described under No. 4585 of the D.C.S. MSS., Vol. IX, but slightly different in the end and colophon.

Complete.

**End :**

तथाच स्मृतिः—

तनुं त्यजति वा काश्यां श्वपचस्य गृहेऽथवा ।
ज्ञान . . . . सिसमये विमुक्तौ विगताशयः ॥

**Colophon :**

इति तत्त्वबोधप्रकरणं समाप्तम् ॥

---

(*a*-7) ब्रह्मस्तवराजः.

BRAHMASTAVARĀJAḤ.

Foll. 170.

In praise of the Supreme Brahman. Herein Dattātrēya teaches his disciple that this world is unreal and that the Supreme Brahman alone is real, and that the individual self is identical with the Supreme Brahman.

Complete.

**Beginning :**

पुरुषः प्रकृतिर्नाहं न च दीर्घो लघू(घुः)परः ।
न मे स्थितिर्लयोप(त्प)त्तिः(त्ती) ब्रह्माहमिति केवलम् ॥
न मातापितरौ भ्राता पुत्रदारादिसम्पदः ।
नामवर्णकुलं नास्ति ब्रह्माह . . . . ॥

**End :**

दत्तेन कथितं गुह्यं शिष्याणां (भक्ति)पूर्वकम् ।
यः पठेत्सर्वदा योगी जीवन्मुक्तो भवेन्नरः ॥

**Colophon:**

इति दत्तात्रेयविराचितं ब्रह्मस्तवराजस्तोत्रं संपूर्णम् ॥

---

(*a*-8) ब्रह्मज्ञाननिर्णयः.

BRAHMAJÑĀNANIRṆAYAḤ.

Foll. 171*a*—172*a*.

On the means conducive to the attainment of the knowledge needed for the realisation of the Supreme Brahman.

Complete.

**Beginning:**

ओं सह नाववतु (शान्तिः).

अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठं मूर्धा च। तत्र चतुष्पादं ब्रह्म विभाति। जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्ते रुद्रः तुर्यमक्षरः स आदि(देवो)विष्णुश्चेश्वरश्च.

**End:**

ज्ञानशिखी ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥
अग्नेरिव शिखा नान्यत् यस्य ज्ञानमयी शिखा।
स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः ॥
कर्मण्यधिकृता ये तु वैदिकैर्ब्राह्मणादयः ॥

**Colophon:**

इति ब्रह्मज्ञाननिर्णयः समाप्तः ॥

---

(*a*-9) आत्मविद्याविलासः.

ĀTMAVIDYĀVILĀSAḤ.

Foll. 172*b*—173*a*.

In praise of Dakṣināmūrti who is considered to be the bestower of true wisdom.

Incomplete.

**Beginning:**

ओङ्कारैकनिरूप्यं पङ्कजभवनादिभावितपदाब्जम् ।
किङ्करकैरवशशिनं (कुमारजन)कं शिवं कलये ॥
वटस्याधः कश्चित् करकलितचिन्मुद्रमचलं
निटालाक्षं सूक्ष्मं मुनि(वरगणा)सेव्यचरणम् ।
चिदानन्दाकारं मदनहरमापूर्णममरं
सदा ध्यायेदन्तः परमशिवमा(द्यं सु)पुरुषम् ॥

**End:**

दैवतानि कति सन्ति नावनौ नैव तानि मनसौम्य(सा म)तानि मे ।
दीक्षितं जडधियामनुग्रहे दक्षिणास्यमुखमेव दैवतम् ॥

The remaining foll. are left blank.

---

R. No. **1420.**

Palm-leaf. 16⅜ × 1½ inches. Foll. 73. Lines, 7 in a page. Grantha. Slightly injured.

Purchased in 1914–15 from M.R.Ry. Dēvanāthācārya of Rāmēśvaram.

(*a*) प्रायश्चित्तसुधानिधिः.

PRĀYAŚCITTASUDHĀNIDHIḤ.

Foll. 1*a*—48*a*. Fol. 48*b* is left blank.

By a son of Timmayajvan of Pedamallagoṇḍa family. Similar to the work described under No. 3490 of the D.C.S. MSS., Vol. VII.

To the end of Yatipratigrahaprāyaścitta.

**Beginning:**

. . . . . . . निस्सरम(न्म)दझरीवगाहो मद-
भ्रमद्भ्रमरझङ्कृतिप्रतिनदद्दिशामण्डलः ।
फणीन्द्रकृतकुण्ड(ल)स्सविनयानताखण्डलः
करोतु कुशलं मम . . . . . . . ननः ॥

पाणिनिजैमिनिकपिलव्यासकणादाक्षचरणफणितषु ।
प्रौढस्मृतीतिहासत्रयीपुराणेषु विदिततत्त्वार्थः ॥
पेदमल्ल . . . . गोण्डकुलेशतिम्मयज्वसुतः ।
प्रायश्चित्तसुधानिधिमतनोज्जगतां हिताय निरवद्यम् ॥

अथेदानीं विवक्षितप्रायश्चित्ता . . . . द्यपापविज्ञानाय तद्विवेकः क्रियते ।

तत्र संवर्तः—

नवधा पापमादिष्टं मुनिभिः शास्त्रदर्शिभिः ।
समाहृत्य समासेन प्रायश्चित्तविवक्षया ॥

. . . . . . . प्रायश्चित्तशब्दार्थमाह ।

गौतमः—

प्रायः पापं विजानीयात् चित्तं तस्य विशोधनम् ।
प्रायश्चित्तमिति प्रोक्तं कर्मपापापनोदकम् ॥ इति ।

**End:**

अन्नं वा शाकमात्रं वा रूपकं वस्त्रमेव वा ।
किमर्थीने द्विजो यस्तु पापे(स पापो) नरकं व्रजेत् ॥
तस्य दोषविनाशाय प्राजापत्यं च रूपके ।
ततः परं तु चान्द्रस्स्यादन्नमात्रे ह्युपोषणम् ॥
परेद्युः पञ्चगव्यं च पीत्वा शुद्धिमवाप्नुयात् ।

इति हेमाद्रौ यतिप्रतिग्रहप्रायश्चित्तम् ॥

---

(*b*) कुण्डमण्टपादिलक्षणम्.

KUṆḌAMAṆṬAPĀDILAKṢAṆAM.

Foll. 49*a*—62*a*. Fol. 62*b* is left blank.

On the distinguishing characteristics of the various kinds of sacrificial pits and altars, etc., as laid down in authoritative works.

Complete.

**Beginning:**

मनुः—

लोकसंव्यवहारार्थं खरास्संज्ञा(?) प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां तां प्रवक्ष्याम्यशेषतः ॥
जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रवेः ।
परमन्तत् प्रमाणानां त्रसरेणुः प्रवक्ष्यते ॥

* * * *

अथ मण्टपलक्षणम्—

बोधायनः—

मथनाङ्गुलिकूर्परयोर्मध्ये प्रामाणिकः करः ।

छरितो(न्दो)गपरिशिष्टे—

अङ्गुलिमानं तु यत्र यत्रोपदिश्यते । तत्र बृहत् पर्य(र्व)ग्रन्थिभिर्म(र्मि)-नुयात् ।

अथ पाञ्चरात्रे—

कुर्याद्वेष्णप(द्वैष्णव)योगेषु चतुर्द्वारांश्च मण्टपान् ।
सारदारुमयान् स्तम्भान् दृधौ(ढा)न् कुर्यादृजून् समान् ॥

**End:**

मैत्रायणीयपरिशिष्टे—

दर्भाभावे का(को)नः प्रतिनिधिः । पलाशाश्वत्थरोहितकोदुम्बराणामलाभे तिलकनीपनिम्बराजप्लक्षशाल्मलाम्लककसि(पि)त्थरो(को)विदारविभीतकश्ले-ष्मातकसर्पकण्टकिवर्जम् । घृतमन्नार्थे प्रतिनिधि । तदभावे दधि पयो वा ॥

**Colophon:**

इति कुण्डमण्टपादिलक्षणम् ॥

---

(*c*) प्रायश्चित्तवचनानि.

PRĀYAŚCITTAVACANĀNI.

Foll. 63*a*—73*b*.

Similar to the work described under No. 3481 of the D.C.S. MSS., Vol. VII.

Complete.

**Beginning:**

मम कुमारस्य जन्मलग्नप्रभृति एतच्चौलोपनयनशुभलग्नपर्यन्तं बाल्ये वयसि बाज्ञानतः पित्राद्युपेक्षया च . . . . . . . . .

* * * *

पूर्वपूर्वसंस्कारकालातिक्रमदोषपरिहारार्थमस्य कुमारस्य चौलोपनयनयोग्यतासिद्ध्यर्थं च अस्माकमाचारु(र्य)त्वयोग्यतासिद्ध्यर्थं च गायत्रीप्रदानयोग्यतासिद्ध्यर्थं च यथाशक्ति कृच्छ्राण्याचरिष्ये ।

**End:**

एवं सर्वप्रायश्चित्तेषु हिरण्यश्राद्धं कुर्यात्, द्वादश ब्राह्मणान् केशवादिभिरभ्यर्च्य हिरण्यं दद्यात् । इदमेव नान्दीमुखम् । अतः परं पुण्याहं वाचयित्वा, दीनाननाथान्यथाशक्ति दक्षिणादिभिः सन्तोष्य प्रायश्चित्तका(रयि)तारं दक्षिणाभिस्सन्तोषयेत् । एवमनुष्ठिते शुद्धो भवति । शुद्धोऽहमिति भावयन् पापशङ्कां न स्मरेत् ।

**Colophon:**

इति सर्वप्रायश्चित्तं सिद्धम् ॥

---

R. No. **1421.**

Palm-leaf. $16 \times 1\frac{1}{2}$ inches. Foll. 141. Lines, 7 in a page. Grantha. Slightly injured.

Purchased in 1914–15 from M.R.Ry. E. R. Śrīnivāsarāghavācāriyar, Temple Doctor, Rāmēśvaram.

लीलावती—द्राविडटीकासहिता.

LĪLĀVATĪ WITH TAMIL COMMENTARY.

Same work as that described under R. No. 338 *ante*, but with a commentary in Tamil.

Breaks off in the Kuṭṭakavyavahāra.

R. No. **1422.**

Palm-leaf. 16⅞ × 1⅛ inches. Foll. 64. Lines, 7 in a page. Grantha. Slightly injured.

Purchased in 1914–15 from M.R.Ry. E. R. Śrīnivāsarāghavācāriyar, Temple Doctor, Rāmēśvaram.

(*a*) प्रायश्चित्तपद्धतिः.

PRĀYAŚCITTAPADDHATIḤ.

Foll. 1*a*—40*b*.

Similar to the work described under No. 3480 of the D.C.S. MSS., Vol. VII.

Complete.

**Beginning:**

शुक्लाम्बरधरं ( . . ) विघ्नोपशान्तये ॥
वन्दे विघ्नेशवाणीशौ लक्ष्मीपतिमुमापतिम् ।
सर्वेषां पापसङ्घानां प्रायश्चित्तविधे कृते ॥
आलोच्य सर्वशास्त्राणि यथाशक्ति यथामति ।
क्रियते साधुबोधाय प्रायश्चित्तस्य पद्धतिः ॥

प्रायश्चित्तानुक्रमः—

पूर्वेद्युरुपवासः, परेद्युः प्रातः स्नानम् नित्यकर्म निवृत्य, पुण्याहकारयितृत्ववरणम्, परिषन्निर्णयः, मलापकर्षणस्नानं, महासङ्कल्पः, मृत्तिस्नानम्, . . . . भ्यर्चना, परिषत्कृत्यम्, विज्ञापनाप्रकारः ।

* * * *

कुशकुसुमाक्षतान् गृहीत्वा अस्मिन् चिकीर्षिते सर्वप्रायश्चित्तानुष्ठाने भवद्भिः पारिषदत्वेन भवितव्यमिति परिषदं वृत्वा तत्सन्निधौ प्राणानायम्य देशकालौ सङ्कीर्त्य.

**End:**

दीनान्धकृपणेभ्यो यथाशक्ति हिरण्यं दद्यात् । ब्राह्मणाशीर्वादः । तत आ . . . . . कारयितारं सम्यक् संपूज्याधिकां दक्षिणां दत्वा

वाद्यपुरस्सरं गृहं प्रविश्य ब्राह्मणभोज . . . . . . . रणां कुर्यात्
एवं कृते समस्तकलुषेभ्यो मुक्तो भवति ॥

**Colophon:**

इति सर्वप्रायश्चित्तं संपूर्णम् ॥

---

(*b*) दानविधिः.

DĀNAVIDHIḤ.

Foll. 41*a*—57*b*

Deals with the different kinds of gifts to be made to the Brahmins and with the supposed efficacy of such gifts.

Complete.

**Beginning:**

सुमुखश्चैक . . . . . . . . . यते ॥
शुक्लाम्बर . . . . . . . . . . येत् ॥
अभीप्सिता . . . . . . . . . नमः ॥
सर्वमङ्ग . . . . . . . . . . . ते ॥

* * * *

अथाचम्य देशकालौ सङ्कीर्त्य शुभतिथौ सहकुटुम्बानां . . . र्थं चतुस्समुद्रमध्ये शैलवनोपेतपृथिवीदानसमफलावाप्त्यर्थं पित्रादीनां नरकादुत्तीर्य शाश्वत . . . र्थं

* * * *

गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।
रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात् ॥

**End:**

दशदानं ब्राह्मणेभ्यः फलदानं समाचरेत् ।
भूरिदानं यथाशक्ति ब्राह्मणान् भोजयेत्ततः ॥
एवं यो भक्तिभावेन कुर्यात्पुत्रं सुजीवितम् ।
लभते बहुसन्तानं सौभाग्यं लभते धनम् ॥

**Colophon:**

इति दानयामलोक्तमृतपुत्रहर्शिशुमारदानविधिः संपूर्णः ॥

Foll. 58—64*a* contain a few lines from various Smṛtis.

---

R. No. **1423.**

Palm-leaf. $16\frac{1}{4} \times 1\frac{5}{8}$ inches. Foll. 28. Lines, 6 in a page. Grantha. Good.

Purchased in 1914-15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

(*a*) ध्यानरत्नावली.

DHYĀNARATNĀVALĪ.

Foll. 1*a*—19*a*.

A collection of stanzas culled from the Bhāgavata describing the different ways in which God (Lord Kṛṣṇa) may be conceived for purposes of contemplation.

Complete.

**Beginning:**

श्रीकान्तो मातुलो यस्य जननी सर्वमङ्गला ।
जनकः शङ्करो देवस्तं वन्दे कुञ्जराननम् ॥

प्रथमस्कन्धे नवमे भीष्मवरदध्यानम्—

स देवदेवो भगवान् प्रतीक्षतां कलेबरं यावदिदं हि नैम्यहम् ।
प्रसन्नहासारुणलोचनोल्लसन्मुखाम्बुजो ध्यानपथश्चतुर्भुजः ॥

तदोपसंहृत्य गिरस्सहस्रिणी विमुक्तसङ्गं मन आदिपूरुषे ।
कृष्णे लसत्पीतपटे चतुर्भुजे पुरःस्थिते मीलितदृग्व्यधारयत् ॥

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥

एकादशे द्वारकापतिध्यानम् ।

**End:**

द्वादशे वृष्णिपतिध्यानम् ।

श्रीकृष्ण कृष्णसख वृष्णिवृषावनीध्रुग्राजन्यवंशदहनानपवर्गवीर्य ।
गोविन्द गोपवनिताव्रजभृत्यगीततीर्थश्रव श्रवणमङ्गल पाहि भृत्यान् ॥

ध्यानरत्नावलिः कण्ठे यैर्धृता भक्तिसत्तमैः ।
तेषां दृश्यो भवेत् कृष्णः कौस्तुभामुक्तकन्धरः ॥

Fol. 19 contains a few sentences on Ēkādaśīśrāddhaviṣaya.

---

(*b*) भगवन्नामरत्नावली.

BHAGAVANNĀMARATNĀVALĪ.

Foll. 20*a*—23*a*.

On the religious efficacy resulting from the repetition, contemplation or hearing of the different names of God.

Complete.

**Beginning:**

स्वनामकीर्तनादेव सुलभं व्रजवल्लभम् ।
शुकशास्त्रेश्वरं कृष्णमाश्रये जगतां पतिम् ॥

प्रथमस्कन्धे—

आपन्नस्संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततस्सद्यो विमुच्येत यद्बिभेति स्वयं भयं(वः) ॥
कुर्वाणा यत्र कर्माणि भगवच्छिक्षया सकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥

**End:**

नामरत्नावलीमेतां कण्ठे धृत्वा रमापतेः ।
तद्दर्शनार्हो भवति भक्तिपूतः पुमानिह ॥

Foll. 23*b* and 24*a* contain certain Mantras addressed to Gōpālakṛṣṇa. Fol. 24*b* is left blank. Foll 25 and 26*a* contain a few stanzas from Kucēlōpākhyāna. Fol. 26*b* is left blank. Fol. 27

contains a few stanzas of Rāmatārakōpadēśa. On fol. 28 a few stanzas are given dealing with Nāḍi, Yōginī and Svargaphala.

---

R. No. **1424.**

Palm-leaf. 15 × 1½ inches. Foll. 110. Lines, 8 in a page. Grantha. Good.

Purchased in 1914–15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

(*a*) भगवन्नामकौमुदी.

BHAGAVANNĀMAKAUMUDĪ.

Foll. 1*a*—51*b*.

Herein the author investigates the meaning of the various Puranic passages, which describe the efficacy of repeating the names of God, and comes to the conclusion that such repetition is not only capable of removing sin but is also conducive to the accomplishment of the four Puruṣārthas, viz., Dharma, Artha, Kāma and Mōkṣa. By Lakṣmīdhara, son of Narasiṁhasūri and disciple of Anantānandaraghunāthasvāmin. He is also the author of the Amṛtataraṅgiṇī, a commentary on the Bhāgavata, and of the Advaitamakaranda.

Contains Paricchēdas one to three complete. These deal wtih the following subjects :—

१. पुराणानां विवक्षितार्थत्वप्रतिपादनम्.

२. नामकीर्तनस्य प्राधान्येन पुरुषार्थप्रतिपादनम्.

३. नामकीर्तनस्य पुरुषार्थसाधनत्वप्रतिपादनम्.

**Beginning:**

शुक्लाम्बरधरं विष्णुं (. .) विघ्नोपशान्तये ॥

अंहस्संहरदखिलं सकृदुदयादेव सकललोकस्य ।

तरणिरिव तिमिरजालं जयति जगन्मङ्गलं हरेर्नाम ॥

कारुण्यामृतनिर्झरस्सुरसरिज्जन्माकरः श्रीवधू-

लीलाब्जं व्रजकामिनीकुचतटीकस्तूरिकास्थासकः ।

उत्तंसस्सुरयोषितां मुनिमनोवश्यौषधीपल्लवो
यस्याङ्घ्रिस्सुरवल्लभस्स जयति श्रीपुण्डरीकप्रियः ॥

* * * *

यत्पादपद्मनखकान्तितरङ्गजीर्य-
ज्जम्बालजाङ्घिकधियां न धियामभूमिः ।
निस्सीमसौख्यजलधिर्जयतादनन्त-
स्सोऽस्मद्गुरुर्जगदनुग्रहजागरूकः ॥

अपिच—

अधीशं निस्स्वानां शमनदतटीषु प्रवसता-
मशेषाणामाद्यं गुणगरिमनिर्मुक्तमपि यम् ।
मृषामानाद्दूरं श्रुतिरुपचरन्ती सविनयं
शनैर्यत्नादन्तर्भवति सुभगानां परिबृढम् ॥
चेतश्चकोरसन्तोषपीयूषाम्बुधिवृद्धये ।
इयं विस्तार्यते श्रीमद्भगवन्नामकौमुदी ॥

अत्र श्रीभगवन्नाममाहात्म्यप्रतिपादकानि पुराणवचनान्युदाहृत्य विचार्यन्ते। किमेतान्यविवक्षितस्वार्थानि, उत स्वार्थपराणीति। यद्यपि स्वार्थपराणि तदापि किं साक्षात्पापक्षयहेतोः कस्यचिदङ्गभावेन भगवन्नामकीर्तनं पापक्षयहेतुः उत स्वप्राधान्येन, यदापि स्वप्राधान्येन तदापि किं श्रद्धाभक्तिज्ञानवैराग्याभ्यासदेशकालविशेषादिसापेक्षत्वेन, उत तन्नैरपेक्ष्येणेति। अस्य च विचारस्य सकलश्रुतिस्मृतीतिहासपुराणागमार्थतत्त्वसन्देहसन्दोहलतालवित्रचरणनखचन्द्रिकाञ्चलस्य श्रीमदनन्तानन्दरघुनाथस्य करुणाकादम्बिनीमुक्तयुक्तिसुधोद्धारासारैः स्मृतिपुराणवचनविरोधाभासभावितनितान्तमसृणशङ्कापङ्कप्रक्षालनेन तस्यैव रघुराजशिरोमणेः सर्वतः प्रसृमरपरमकारुण्यसुधार्णवस्य निरङ्कुशमहिमधाम्नि श्रीरामनाम्नि स्वचेतसस्समाधानमेव प्रयोजनम् ।

*

तस्माद्विवक्षितार्थान्येव नामकीर्तनस्य पापक्षयहेतुत्वाप्रतिपादकानि पुराणवचनानीति ।

कृष्ण कृष्ण मधुसूदन विष्णो कैटभान्तक मुकुन्द मुरारे ।
पद्मनाभ नरसिंह हरे श्रीराम राम रघुनन्दन पाहि ॥

**Colophon:**

इति श्रीमदनन्तानन्दरघुनाथपादपद्मोपजीविनो लक्ष्मीधरस्य कृतौ श्रीभगवन्नामकौमुद्यां पुराणवचनानां विवक्षितार्थप्रतिपादनं नाम प्रथमः परिच्छेदः ॥

**End:**

झटिति जगतामंहस्तूलीन्द(न्धने द)हनो महा-
दहरकुहरध्वान्तध्वंसयन्न(प्रदानन)भोमणिः ।
किरणलहरी चान्द्री चेतश्चकोरचमत्कृतेः
भवतु भवतां नामज्योतिर्मुदे मदनद्रुहः ॥
येन भागवतव्याख्या कृतामृततरङ्गिणी ।
अद्वैतमकरन्दश्च सोऽकरोन्नामकौमुदीम् ॥

**Colophon:**

इति श्रीमदनन्तानन्दरघुनाथपरमहंसपरिव्राजकाचार्यपादपद्मोपजीविनः श्रीमन्नरसिंहसूनोः लक्ष्मीधरस्य कृतौ श्रीभगवन्नामकीर्तनस्य केवलस्यैव पुरुषार्थसाधनत्वप्रतिपादनं नाम तृतीयः परिच्छेदः ॥

समाप्ता नामकौमुदी ॥

The scribe adds—

संवत्सरे शार्वरिनामके रवौ सिंहं गते सोमदिनेऽग्र्य ऋक्षे ।
गोपालनाम्ना लिखितं द्विजेन श्रीपार्वतीशाभिधकौमुदीदम् ॥

(*b*) भगवन्नामकौमुदीव्याख्या—प्रकाशः.
BHAGAVANNĀMAKAUMUDĪVYĀKHYĀ—PRAKĀŚAḤ.

Foll. 52*a*—100*b*. The remaining leaves are left blank.

A commentary on the work noticed above: by Nandadēva, son of Āpadēva.

Almost complete, the commentary on the last stanza alone being wanting.

**Beginning:**

नाम्नैव नाशयति यो भवपाशबन्धं
दाम्नैव यो व्रजवधूभिरयत्नबद्धम् ।
एवं दयाजलनिधिर्निजवर्गवश्यः
सेव्यस्स मेऽस्तु सततं सुखसिन्धुरेकः ॥

नमस्कृत्य गुरून् सर्ववेदान्तार्थाविरोधतः ।
भगवन्नामकौमुद्याः प्रकाशः प्रवितन्यते ॥

* * * *

प्रेक्षावतामधिकारिणां भगवन्नाममाहात्म्यविषये निर्णयज्ञानाय चिकीर्षितग्रन्थस्याविघ्नपरिसमाप्त्यादिकामो भगवन्नाममाहात्म्यवर्णनमेव मङ्गलमाचरति—अंह इति। दुरितं दुःखं चेत्यर्थः । दुरितनिवर्तकत्वं वचनात् दुःखनिवर्तकत्वं तु श्रोतॄणां सद्योविश्रान्त्यनुभवात् संशब्देन रोगादिनिवर्तकत्वं सूच्यते, तदुक्तम्—

सर्वरोगोपशमनं सर्वोपद्रवनाशनम् ।
शान्तिदं सर्वरिष्टानां हरेर्नामानुकीर्तनम् ॥ इति ॥

* * * *

उपसंहरति तस्मादिति। प्रथमपरिच्छेदसमाप्तौ नामोच्चारणरूपमङ्गलं कुर्वन् नाममाहात्म्यप्रतिपादकस्य ग्रन्थस्य प्रचयगमनरूपं फलं प्रार्थयते। कृष्णेति ।

यन्नामकीर्तनं सद्यस्सर्वपापनिवर्तनम् ।
तं वन्दे परमानन्दसिन्धुं श्रीनन्दनन्दनम् ॥

**Colophon :**

इति श्रीमदापदेवसूनुना नन्ददेवेन कृते श्रीभगवन्नामकौमुदीप्रकाशे प्रथमः परिच्छेदः ॥

**End :**

स्वकीयकृतार्थतामभिनयति—नार्थीयेति । वस्तुतो नामधेयातिशयत्वान्निष्कलङ्कत्वाच्च आत्मन इयमुक्तिः । गुरुणा परमात्मना वा करुणया आत्माविष्कृतः तस्य किं करवै । अतस्तन्नामनि नम्रमभिमुखं मनः ॥

Fol. 102*a* contains a few sentences of some Marathi songs.

---

R. No. **1425.**

Palm-leaf. 13 × 1½ inches. Foll. 76. Lines, 8 in a page. Grantha. Good.

Purchased in 1914-15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

(*a*) भगवद्भक्तिमहिमा.

BHAGAVADBHAKTIMAHIMĀ.

Foll. 1*a*—46*a*.

On the religious efficacy of true devotion to God. Herein those who are devoid of such devotion are condemned.

Complete.

The subjects dealt with in this work are given below :—

१. अभक्तनिन्दा
२. सौलभ्यम्.
३. भक्तिसाधनम्.
४. भक्तप्रशंसा.
५. नामप्रशंसा.
६. भजनविवेकः.
७. भगवत्स्तुतिः.
८. विरक्तिः.
९. दौर्लभ्यम्.

**Beginning :**

नारायणं नमस्कृत्य ( . . . ) ततो जयमुदीरयेत् ॥
आपन्नस्संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततस्सद्यो विमुच्येत यद्बिभेति स्वयं भवः ॥

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न शृणुयात् यशः कलिमलापहम् ॥
* * * *
धर्मस्स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥
श्रेयः स्तुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसुक्लेशचयोऽवशिष्यते नान्यद्यथा स्थूलतुषावघातिनाम् ॥
नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥
भगवद्भक्तिहीनस्य जातिः शास्त्रं जपस्तपः ।
अप्राणस्येव देहस्य मण्डन लोकरञ्जनम् ॥

**End:**

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ।
वासुदेवे भगवति यासामित्यर्पितं मनः ॥
गोप्यस्तु कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ।
दृग्भिर्हृदीकृतमलं परिरभ्य सद्यस्तद्भावमापुरपि नित्ययुजां दुरापम् ॥
आहुश्च ते नलिननाभपदारविन्दं योगै(गी)श्वरैर्हृदि(वि)चिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं गेहं जुषामपि मनस्युदियात्सदा नः ॥

Fol. 41*b* is left blank. Fol. 46*b* contains one stanza of Bāṇa-liṅga.

---

(*b*) आचारादिलक्षणशतकम्.

ĀCĀRĀDILAKṢAṆAŚATAKAM.

Foll. 47*a*—52*a*.

A centum of stanzas dealing with certain rules of conduct; the subjects treated herein are apparent from the headings of the work given below: by Nārōjipaṇḍita, son of Viśvanāthapaṇḍita and Bhavānī.

Complete in five Paddhatis as given below :—

१. वर्णाश्रमाचारपद्धतिः. ४. उद्योगपद्धतिः.

२. दैवपद्धतिः. ५. शारीरपद्धतिः.

३. राजपद्धतिः.

**Beginning :**

नत्वा गणेशं वाणीं च गुरुपादसरोरुहम् ।
लक्षणानि प्रवक्ष्यामि शास्त्रोक्तानि यथामति ॥
पूर्वैराचरितं धर्म्यं शास्त्रोक्तं लोकसम्मतम् ।
वर्णाश्रमानुसरणमेतदाचारलक्षणम् ॥
शमो दमः क्षमा शान्तिः स्वाध्यायो ब्रह्मचिन्तनम् ।
षट्कर्मकरणे श्रद्धा प्रोक्तं ब्राह्मणलक्षणम् ॥

**End :**

सन्तोषः सर्वदा सौख्यं स्थिरा श्री रोगवर्जितम् ।
धर्मे रतिः क्षमा शान्तिरेतत्सुकृतिलक्षणम् ॥
आयुरारोग्यमैश्वर्यं सन्ततिस्सत्समागमः ।
दाने यशस्यभिरुचि[चो]रेतत्पठनतो भवेत् ॥
नारोजिपण्डितेनेदं शतकं लक्षणान्वितम् ।
प्रोक्तमेतत्पठन् मर्त्यः प्राप्नुयादीप्सितं फलम् ॥

**Colophon :**

इति श्रीमद्विश्वनाथपण्डितार्यसूनुनारोजिपण्डितविरचितं लक्षणशतकं संपूर्णम् ॥

(*c*) पूर्वपुण्याष्टकम्.

PŪRVAPUṆYĀṢṬAKAM.

Foll. 52*b*—53*a*.

Eight stanzas by the same author as that of the previous work, declaring that long life, health, prosperity, progeny, etc., are all the outcome of the good deeds of the former birth.

Complete.

**Beginning:**

आयुरारोग्यमैश्वर्यं सन्ततिस्सत्समागमः ।
दाने यशस्यभिरुचिः पूर्वपुण्यस्य लक्षणम् ॥
विद्वान् पुत्रः प्रिया भार्या स्थिरा श्रीर्धर्मचिन्तनम् ।
समुन्नतिः शिवे भक्तिः पूर्वपुण्यस्य लक्षणम् ॥

**End:**

गुरोराराधनं सत्यं मोक्षे धीर्ब्रह्मचिन्तनम् ।
सर्वत्र परिपूर्णत्वं पूर्वपुण्यस्य लक्षणम् ॥
पूर्वपुण्याष्टकमिदं यः पठेत्सर्वदा नरः ।
तस्य पुण्यं च कीर्तिश्च यशश्चातिविवर्धते ॥

**Colophon:**

इति श्रीमद्विश्वनाथपण्डितार्यसूनुनारोजिपण्डितविरचितं पूर्वपुण्याष्टकं संपूर्णम् ॥

---

(*d*) सूक्तिमालिका.

SŪKTIMĀLIKĀ.

Foll. 53*a*—67*a*. Fol. 67*b* is left blank.

A collection of stanzas containing wise sayings on various subjects and indirectly inculcating devotion to God: by Narōji-paṇḍita, son of Viśvanātha and Bhavānī.

Incomplete. Contains the following Paddhatis:—

१. नमस्कारपद्धतिः.
२. दैवपद्धतिः.
३. नीतिपद्धतिः.
४. सज्जनपद्धतिः.
५. दुर्जनपद्धतिः.
६. सामान्यपद्धतिः.
७. अन्योक्तिपद्धतिः.
८. कथापद्धतिः.

**Beginning:**

विनायकं नमस्यामि समस्तकविनायकम् ।
दधानं मोदकं हस्ते भक्तचित्तप्रमोदकम् ॥

सदाशिवस्ते जनको माता ते सर्वमङ्गला ।
विघ्नेशस्त्वां गणपते तस्मादादौ नमाम्यहम् ॥
विश्वनाथगुरुं नत्वा भवानीं मातरं तथा ।
नारोजिपण्डितेनेयं क्रियते सूक्तिमालिका ॥

**End:**

अथ दशावताराः—

मत्स्यस्य—

दुष्टेन यद्धृतं वस्तु बलाद्ग्राह्यं सता ततः ।
शङ्खासुरहृता वेदा मत्स्येन पुनराहृताः ॥

* * *

वामनस्य—

पराक्रमः स्वतस्सिद्धः वयस्तत्र न कारणम् ।
बालेन विष्णुना क्रान्ता त्रिलोकी तु त्रिभिः पदैः ॥

Foll. 68 and 69 contain stanzas taken from Dravyapūjāvidhipaṭala and Śivastutivacanas, found in the Kāmikāgama.

The remaining leaves are left blank.

---

R. No. **1426.**

Palm-leaf. 14½ × 1 inches. Foll. 51. Lines, 5 in a page. Grantha. Good.

Purchased in 1914–15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

(*a*) शाण्डिल्यसूत्रम्.

ŚĀṆḌILYASŪTRAM.

Foll. 1*a*—6*a*. Fol. 6*b* is left blank.

By Śāṇḍilya. Same text as that described under No. 5150 of the D.C.S. MSS., Vol. XI.

Complete in three Adhyāyas.

**Beginning :**

अथ भक्तिमीमांसासूत्राणि लिख्यन्ते—

अथातो भक्तिजिज्ञासा । सा परानुरक्तिरीश्वरे । तत्संस्थस्यामृतत्वोपदेशात् । ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः । तयोपक्षयाच्च । द्वेषप्रतिपक्षभावात् । रसशब्दाच्च । रागः न क्रियाकृत्यनपेक्षणात् ज्ञानवत् ॥

**End :**

त्रीण्येषां नेत्राणि शब्दलिङ्गाक्षभेदात् रुद्रवत् । अतस्तिरोभावविकाराश्च स्युः क्रियाफलसंयोगात् संयोगादिति ॥

इति तृतीयोऽध्यायः संपूर्णम्(ः) ॥

**Colophon :**

शाण्डिल्यशतसूत्री भक्तिमीमांसा समाप्तेयम् ॥

(*b*) **शाण्डिल्यसूत्रभाष्यम्.**
ŚĀṆḌILYASŪTRABHĀṢYAM.

Foll. 7*a*—51*b*.

A commentary on the above work in accordance with the Viśiṣṭādvaita-Vēdānta : by Śrīnivāsa, who is spoken of in the colophon as Vādībhakēsarin and as being the disciple of Vēṅkaṭācārya of Gōvardhana.

Complete.

**Beginning :**

श्रीनिवासाङ्घ्रि(ख्य)दासेन नत्वाऽचार्यपरम्पराम् ।
भाष्यं शाण्डिल्यसूत्राणां क्रियते सत्प्रमाणतः ॥

व्यासबोधायनादीनां सिद्धान्तस्यानुकूलता ।
तथा वेदान्तसूत्राणां ज्ञातव्यात्र मुमुक्षुभिः ॥
सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः ।
स्ववाक्यानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

इति भाष्यलक्षणमुक्तन्तदत्राप्यस्त्येवेति द्रष्टव्यम् । अथातो भक्ति-जिज्ञासा—अत्राथशब्द आनन्तर्ये, अतःशब्दो हेतुभावे, तथाहि । ऐहिकामुष्मिकफलभोगविरागानन्तरं गर्भजन्ममरणरूपसंसृतिदुःखासहिष्णुत्वाद्धेतोस्तदेव दर्शयति श्रुतिः—यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मै

* * * *

अतोऽनन्तस्थिरफलरूपभगवद्भक्तिजिज्ञासा कर्तव्येत्यर्थः । ज्ञातुमिच्छा जिज्ञासा इष्यमाणमिह भक्तिज्ञानम् न देवताप्रतिपत्तिर्भक्तिरूपैवोच्यते, तद्वदिति ।

इति प्रथमे अध्याये प्रथममाह्निकम् ।

**End:**

ननु उपमानस्यापि प्रमाणमुक्तं कथं त्रीण्येवेति चेन्न । तस्य प्रत्यक्षादावन्तर्भावात् । तत्कथमिति चेत् शृणु—गवयमजानन्नपि यथा गौस्तथा गवय इति कुतश्चिदारण्यकाच्छ्रुत्वा वनं गतो वाक्यार्थं स्मरन् यथा गोसादृश्यविशिष्टपिण्डं पश्यति तदा तद्वाक्यार्थस्मरणसहकृतगोसादृश्यविशिष्टपिण्डज्ञानं जायते इत्युपमानशरीरम् । तस्य स्मरणरूपत्वात् प्रत्यक्षेऽन्तर्भावः । यत्र यत्र गोसादृश्यं तत्र तत्र गवयशब्दवाच्यत्वमिति व्याप्तिग्रहणापेक्षत्वादनुमानेऽन्तर्भावः, आरण्यकवाक्यजन्यत्वात् शब्देऽन्तर्भाव इति । न च गोपिण्डस्य तदेन्द्रियासन्निकर्षात् कथं प्रत्यक्षेऽन्तर्भाव इति वाच्यम् । स्मरण-

ज्ञानस्य तदानीमपि वर्तमानत्वात् तस्य प्रत्यक्षमूलत्वादित्यलमतिविस्तरेणेति ।

श्रीनिवासाङ्घ्रि(ख्य)दासेन श्रीयतीन्द्रकृपेक्षणात् ।
भाष्यं शाण्डिल्यसूत्राणां कृतं श्रुत्यादिमानतः ॥
न चात्र काचिदुत्प्रेक्षा कृता नापि कुदृष्टिवत् ।
पराशरादिसिद्धान्तानुसारेण मतं बुधैः ॥

**Colophon:**

इति श्रीगोवर्धनकृतवासानां वादिहंसनवाम्बुदानां श्रीमद्वेङ्कटाचार्याणां चरणारविन्दद्विरेफेण वादीभकेसरिणा श्रीनिवासदासेन कृतं शाण्डिल्यसूत्र-भाष्यं समाप्तम् ॥

---

R. No. **1427.**

Palm-leaf. 15⅜ × 1 inches. Foll. 39. Lines, 6 in a page. Grantha. Good.

Purchased in 1914-15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

Fol. 1*a* gives the name of the work (*a*) as Bhagavannāma-sūtramāhātmyam. Fol. 1*b* is left blank.

(*a*) **शिवनामसूत्रमाहात्म्यम्.**

ŚIVANĀMASŪTRAMĀHĀTMYAM.

Foll. 2*a*—13*a*. Fol. 13*b* is left blank.

Treats of the manner and greatness of muttering the name of God Śiva.

Complete; said to occur as Adhyāyas four to eight of the Cidambarakhaṇḍa and as Adhyāyas seven and eight of the Piṣṭamṛdbhārakhaṇḍa which form part of the Maṇivākyacaritra of the Skāndōpapurāṇa.

**Beginning:**

स्कान्दोपपुराणे मणिवाक्यचरित्रे चिदम्बरखण्डे ऋषीन् प्रति अगस्त्यः—

श्रीषण्मुखः—

गुरूपदेशदीपेन तच्छुश्रूषात्मकेऽमले ।
तैलस्थितायां तद्भक्तिवर्त्यां लग्नेन तापस ॥
गुरुक्रमात्तपात्रेण मायान्धतमसोऽन्तरे ।
स्थितमक्षरयुग्माङ्गं शिवं पश्यन्ति योगिनः ॥

*　*　*　*

तस्मात्तापस पुण्यात्मन् ससूत्रं नाम पावनम् ।
मत्तो गृहीत्वाविरतं भजस्व परमेश्वरम् ॥
सूत्रेण रहितो यो वा करोति शिवकीर्तनम् ।
तस्य तत्फलसांनिध्यं नाप्नोति सततक्रिया ॥
तस्मात् ससूत्रं गुरुणा दत्तं नामातिपावनम् ।
जप्तव्यं नान्यथा लोके शम्भोराज्ञा तथैव हि ॥

*　*　*　*

तस्मान्मन्त्रस्य सूत्रत्वं प्रणवस्य समीरितम् ।
तदूर्ध्वस्थं ब्रह्मरूपं शिव इत्यक्षरद्वयम् ।
तस्मात्ससूत्रमित्येव प्रोक्तं तापसपुङ्गव ।

*　*　*　*

**Colophon:**

इति स्कान्दोपपुराणे मणिवाक्यचरिते चिदम्बरखण्डे चतुर्थोऽध्यायः ॥

*　*　*　*

इत्युक्तस्तेन तस्माद्वै गृहीत्वा नाम पावनम् ।
कीर्तयन्नित्यतुष्टः सन् विचचार शुको मुनिः ॥

**Colophon:**

इति श्रीस्कान्दोपपुराणे चिदम्बरखण्डे अष्टमोऽध्यायः ॥

मणिवाक्यचरिते पिष्टमृद्धारखण्डे सप्तमाध्याये शाण्डिल्यवन्दीसंवादे

श्रीस्कन्दः—

शाण्डिल्यं तपतां श्रेष्ठं शिवज्ञानैकसाधनम् ।
महाभक्तं महेशस्य द्वितीयमिव शंकरम् ॥
साञ्जलिः प्रार्थयामास वन्दी शम्भुपरा द्विजम् ।
यथा मया महेशानभक्तिः सा क्रियते शुभा ॥
तथा दयां कुरु मयि करुणाकर मद्गुरो ।

श्रीशाण्डिल्यः—

शिवभक्तौघसङ्गं च धारणं भस्मनः सदा ॥
रुद्राक्षाणां च देवेशनाम्नां संकीर्तनं मुदा ।
सदा तु शिवनामैतज्जप्तव्यं पुण्यकृद्वरे ॥

**End:**

शक्तिं दास्ये वरगुणे तुभ्यं निर्मलचित्तदाम् ।
तव ज्ञात्वाहमीशस्य नामचिन्तापरायणः ॥
हिमवच्छिखरे रम्ये वसामि शिवशासनात् ।
स्मरिष्यस्य(सि) यदा मां वै तदा यास्ये पुरीमिमाम् ॥

**Colophon:**

इति श्रीस्कान्दोपपुराणे मणिवाक्यचरित्रे पिष्टखण्डे अष्टमोऽध्यायः ॥

---

(*b*) गुरुपादुकाध्यानमहिमा.

GURUPĀDUKĀDHYĀNAMAHIMĀ.

Foll. 14*a*—15*b*.

On the greatness and religious efficacy of contemplating on the holy sandals of the spiritual preceptor as a means of wiping off one's sins.

Complete; said to occur in the 52nd Adhyāya of the Kālahasti-māhātmya forming part of the Śivarahasyasaṅgraha.

**Beginning:**

श्रीशिवरहस्यसंग्रहे कालहस्तिमाहात्म्ये द्विपञ्चाशदध्याये मार्कण्डेयं प्रति शिववचनम्। श्रीशिवः—

अब्रवीद्वचनं तस्य संशयोच्छित्तिकारणम्।
दुस्तराणां च सर्वेषां पापानां महतामपि॥
प्रायश्चित्तं परं विद्धि श्रीगुरोः पादुकास्मृतिम्।
यस्य श्रीपादरजसा यन्मूर्धा सहितो यदि॥
अहं ब्रह्मा च विष्णुश्च भवेम नियतं मुने।
तत्पूजकास्तस्य गुरोः पादुकास्मरणं सकृत्॥
प्रायश्चित्तं परं विद्धि पातकानां मृकण्डुज।
प्रकाशते पञ्चकृत्यं गुरौ यस्मिन्महामते॥

**End:**

इदं शास्त्रार्थसंक्षेपरहस्यं ते मृकण्डुज॥
सद्गुरोः पादुकाध्याने करोत्युत्थाय यः प्रगे।
तस्य नश्यन्ति पापानि वह्निना तूलराशिवत्॥

Fol. 16 is left blank.

---

(*c*) शान्त्यध्यायः.

ŚĀNTYADHYĀYAḤ.

Foll. 17*a*—29*b*.

Deals with a pacificatory course of action which is capable both of averting all kinds of evils likely to befall a person and of causing destruction, etc., to the enemy.

This is said to form the sixth Adhyāya of the Śivadharma-śāstra.

**Beginning:**

शुक्लाम्बर . . . . . . शान्तये ॥

नन्दिकेश्वरः—

अतः परमिदं गुह्यं रुद्रोद्गीतं महोदयम् ।
महाविघ्नप्रशमनं महाशान्तिकरं शुभम् ॥
अकालमृत्युहरणं सर्वव्याधिनिवारणम् ।
परचक्रप्रमथनं सदा विजयवर्धनम् ॥
स्तम्भनं परसैन्यस्य रिपुनाशकरं परम् ।
सर्वदेवग्रहानीकं समस्ताभीष्टदायकम् ॥
सर्वशान्त्याधिकाराख्यं धर्मं वक्ष्ये शृणुष्व तम् ।

* * *

भावमात्रेण सन्तुष्टा उमादेवी वरप्रदा ॥
साक्षादागत्य रूपेण शान्तेनामिततेजसा ।
शान्तिं करोतु मे प्रीता भक्तानां भक्तवत्सल ॥

**End:**

दुष्टः पापसमाचारो मातृहा पितृहा तथा ॥
श्रवणादस्य भावेन मुच्यते सर्वपातकैः ।
शान्त्यध्यायमिदं पुण्यं न देयं यस्य कस्यचित् ॥
शिवभक्ते सदा देयं शिवेन कथितं पुरा ।
नित्यमूर्जितभक्तिश्च शक्तिव्याघातवर्जितः ॥
सर्वकामसमृद्धः स्याद्देयं देयं दिने दिने ।
भक्ते पुण्यमिदं देयं माहात्म्यं शिवमिच्छता ॥

**Colophon:**

इति श्रीशिवधर्मशास्त्रे नन्दिकेश्वरप्रोक्ते शान्त्यध्यायो नाम षष्ठः ॥

---

Foll. 29(*b*) and 30 contain some Marathi songs. The remaining leaves are left blank.

R. No. **1428.**

Paper. 13⅞ × 1¼ inches. Foll. 39. Lines, 8 in a page. Grantha. Good.

Purchased in 1914–15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

(*a*) कलिविडम्बनम्.

KALIVIḌAMBANAM.

Foll. 1*a*—7*a*.

The author Nīlakaṇṭhadīkṣita herein brings out the influence of Kali on people in the present Yuga.

Complete.

**Beginning:**

न भेतव्यं न बोद्धव्यं न श्राव्यं वादिनो वचः ।
झटिति प्रतिवक्तव्यं सभासु विजिगीषुभिः ॥
असंभ्रमो विलज्जत्वमवज्ञा प्रतिवादिनि ।
हासो राज्ञः स्तवश्चेति पञ्चैते जयहेतवः ॥

**End:**

विषेण पुच्छलग्नेन वृश्चिकः प्राणिनामिव ।
कलिना दशमांशेन कालः सर्वोऽपि दारुणः ॥
यत्र भार्यागिरो वेदा यत्र धर्मोऽर्थसाधनः ।
यत्र स्वप्रतिभा मानं तस्मै श्रीकलये नमः ॥
काममस्तु जगत्सर्वं कालस्यास्य वशंवदम् ।
कालकालं प्रपन्नानां कालः किं नः करिष्यति ॥
कविना नीलकण्ठेन कलेरेतद्विडम्बनम् ।
चरितं विदुषां प्रीत्यै राजास्थानानुमोदनम् ॥

**Colophon:**

इति श्रीनिलकण्ठदीक्षितकृतौ कलिविडम्बनम् ॥

(*b*) सभारञ्जनम्.

SABHĀRAÑJANAM.

Foll. 7*b*—13*b*.

One hundred and four witty stanzas intended to please an assemblage and dealing with various subjects: by Nīlakaṇṭhadīkṣita.

Complete.

**Beginning:**

षड्दर्शनीपरिज्ञानमण्डितैरिव पण्डितैः ।
स्तम्भैश्चित्रैर्वितानैश्च सभा किमवभासते ॥
सन्तु सर्वविधा मर्त्या न सन्त्वेके विपश्चितः ।
असूर्येणेव लोकेन किन्तेन विषयेण नः ॥

**End:**

पत्न्या माङ्गल्ययोगेन पत्युरायुः प्रवर्धते ।
प्रकृतीनां तु भाग्येन पार्थिवस्सुखमेधते ॥
चलन्ति सर्वमर्यादाश्चलिते सति पार्थिवे ।
पर्वता अपि कम्पन्ते प्रसक्ते कम्पने भुवः ॥
निर्मितं शतकं साग्रं नीलकण्ठेन यज्वना ।
सभारञ्जनमेतेन साधयन्तु मनीषिणः ॥

**Colophon:**

इति सभारञ्जनं समाप्तम् ॥

---

(*c*) अन्यापदेशः.

ANYĀPADĒŚAḤ.

Foll. 14*a*—26*b*.

By Nīlakaṇṭhadīkṣita. Same work as that described under R. No. 609(*b*) *ante*, wherein see for the beginning.

Complete in one hundred and one stanzas.

**End:**

भूतानां प्रभवस्थितिप्रविलयास्त्वय्येव विश्वम्भरे
त्वद्गर्भे ननु ते रसातलजुषो दैत्याः फणीन्द्राश्च ये ।

त्वं सर्वैरुपजीव्यसे दिविचरैस्त्वत्तोऽपि किञ्चित्परं
न स्यात् स्यादपि वा निरस्तविशयं ब्रह्म त्वमेवासि नः ॥

**Colophon:**

इति नीलकण्ठदीक्षितविरचितोऽन्यापदेशः समाप्तः ॥

---

(*d*) शान्तिविलासः.

ŚĀNTIVILĀSAḤ.

Foll. 27*a*—31*a*. Fol. 31*b* is left blank.

Stanzas inculcating contentment and freedom from worldly attachment: by Nīlakaṇṭhadīkṣita.

Complete.

**Beginning:**

वंशे कस्मिन्नजनिषि कयोः पुत्रतामग्रहीषं
कत्यश्रौषं तदपि कथितास्तच्च सख्यः कतिभ्यः ।
किं नाद्राक्षं व्यसनमथवा किं सुखं नान्वभूवं
नोपारंसीस्त(त्त)दपि हृदयं कीदृशो मे विपाकः ॥
पादौ मे स्तः परमचतुरौ व[illegible]टानेव गन्तुं
वागप्यास्ते निभृतमनृतान्येव वक्तुं वचांसि ।
मीमांसन्ते मम च मतयो दोषदृष्टौ परेषां
पङ्गुर्मूकः पशुरपि भवाम्यात्मनीने तु कृत्ये ॥

**End:**

आगर्भादाकुलपरिबृढादाचतुर्वक्त्रतोऽपि
त्वत्पादाब्जप्रपदनपरान् वेत्सि नश्चन्द्रमौले ।
मायायाश्च प्रपदनपरेष्वप्रवृत्तिं त्वमात्थ
स्वामिन्नेवं सति यदुचितं त(त्र त)त्र प्रमाणम् ॥
दण्डं धत्ते सकलजगतां दक्षिणे यः कृतान्तो
नामाप्यस्य प्रतिभयतनोर्नापगृह्णीमहीति ।

प्राक्षास्मस्तन्निगमवचसामुत्तरो यः कृतान्तो
यद्वा तद्वा भवतु न वयं तस्य पश्येम वक्त्रम् ॥

**Colophon :**

इति श्रीशान्तिविलासस्सम्पूर्णः ॥

---

(*e*) वैराग्यशतकम्.

VAIRĀGYAŚATAKAM.

Foll. 32*a*—38*b*.

By Nīlakaṇṭhadīkṣita. A centum of stanzas inculcating renunciation.

Complete.

**Beginning :**

आस्ते[स्त] कश्चन भिक्षुः सङ्कुचन्नव्ययानि दश ।
न ममेत्यव्यययुगलं याचामस्तं किमस्त्यन्यत् ॥
धीसाचिवः स्थैर्यबलं सङ्कल्पविरोधिशान्तिधनम् ।
विश्वत्रयविषयमिदं वैराग्यं नाम साम्राज्यम् ॥

**End :**

न गृहीतं श्रुतिहृदयं न च निगृहीतं परिप्लवं हृदयम् ।
इच्छामि च धाम परं गच्छामि तु विश्वनाथपुरम् ॥
माध्वं कीकटदेशे कपि(वि)षु न रामानुजायध्वम् ।
आश्रयत राजधानीं काशीमाशीविषाङ्कस्य ॥

**Colophon :**

इति श्रीनीलकण्ठदीक्षितेन विरचितं वैराग्यशतकं संपूर्णम् ॥

Fol. 39 contains a few lines from Brahmayajña and Dēvarṣitarpaṇa.

R. No. **1429.**

Śrītāla. 11×1⅜ inches. Foll. 193. Lines, 12 in a page. Grantha. Good.

Purchased in 1914-15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

(*a*) दक्षिणामूर्त्यष्टकम्.

DAKṢIṆĀMŪRTYAṢṬAKAM.

Fol. 1.

Same work as that described under R. No. 118(*b*) *ante.*

Complete.

---

(*b*) नामद्वादशपञ्जरम्.

NĀMADVĀDAŚAPAÑJARAM.

Fol. 2*a*.

Same work as that described under No. 6473 of the D.C.S. MSS., Vol. XIII.

Complete.

---

(*c*) ब्रह्मसूत्राणि.

BRAHMASŪTRĀṆI.

Foll. 2*a*—9*b*.

Same work as that described under No. 4649 of the D.C.S MSS., Vol. IX.

Complete.

---

(*d*) भगवद्गीता.

BHAGAVADGĪTĀ.

Foll. 10*a*—35*b*.

Same work as that described under No. 1992 of the D.C.S. MSS., Vol. IV, Part I.

Complete.

(*e*) भागवतमाहात्म्यम् (स्कान्द).
BHĀGAVATAMĀHĀTMYAM (SKĀNDA).

Foll. 36*a*—124*b*.

Same work as that described under No. 2490 of the D.C.S. MSS., Vol. IV, Part II.

Complete.

(*f*) हरिभक्तिसुधोदयम्.
HARIBHAKTISUDHŌDAYAM.

Foll. 125*a*—177*b*.

Nārada is herein stated to have related to the sages of Naimiśāraṇya what he learnt from Kapila and what he inculcated in a previous composition of his own about devotion to God Viṣṇu. The greatness of Viṣṇu and of unswerving devotion to Him as also the results of such devotion and the manner of making contemplation in its various stages of Śravaṇa, Manana and Nididhyāsana, are explained and illustrated by narrating the stories of Dhruva and Prahlāda.

Complete in twenty Adhyāyas.

**Beginning:**

एकं यज्जनयत्यनेकतनुभृत्सस्यान्यजस्रं मिथो
भिन्नाकारगुणानि कैश्चिदपि वा नोप्तं न सिक्तं जलैः ।
कालेनापि न जीर्यते हुतभुजा नो दह्यते क्लिद्यते
नाद्भिस्तत्सकलस्य बीजमनिशं ब्रह्माभिधं धीमहि ॥
यत्पादाब्जयुगं सुगन्धि तुलसीलोभाद्भजन्तोऽप्यहो
योगिप्रार्थ्यगतिं प्रयान्ति मधुपा यद्भक्तिहीनास्त्वधः ।
अब्भक्षाः पवनाशिनोऽपि मुनयस्संसारचक्रे भृशं
भ्राम्यन्त्येव गतागतैरिह मुहुस्तस्मै नमो विष्णवे ॥

* * * *

अस्ति त्रैलोक्यविख्यातं वनं नैमिशसंज्ञितम् ।
पवित्रं गोमतीतीरे नित्यपुष्पफलर्द्धिमत् ॥

स्वलङ्कृता महात्मानः श्रीभागवतलक्षणैः ।
ऋषयो यत्र सत्रेण चिरं हरिमपूजयन् ॥

* * *

इत्थं संप्रार्थितः सौम्यैः द्विजैरञ्जलिकङ्कणैः ।
ओमित्युवाच हृष्टात्मा स वैष्णवजनप्रियः ॥

**End:**

स इत्थं विष्णुगाथाभिर्नन्दयित्वा द्विजोत्तमान् ।
शौनकादीन् नैमिशीयान् ब्रह्मसूनुस्तिरोदधे ॥
य इमं शृणुयाद्भक्त्या हरिभक्तिसुधोदयम् ।
कथयेद्वा स पापौघान्मुक्तो मोक्षं च गच्छति ॥

**Colophon:**

इति श्रीहरिभक्तिसुधोदये विंशोऽध्यायः ॥

---

(*g*) पाण्डुरङ्गमाहात्म्यम्.

PĀṆḌURAṄGAMĀHĀTMYAM.

Foll. 178*a*—193*b*.

On the holiness and religious importance of the sacred shrine at Pandrapur, wherein God Viṣṇu is worshipped under the name, Viṭṭhala. It is said to have been narrated by Mārkaṇḍēya to King Ambarīṣa

Complete; said to form the seventh Adhyāya of the Brahmāṇḍapurāṇa.

**Beginning:**

समचरणसरोजं सान्द्रनीलाम्बुदाभं
जघननिहितपाणिं मण्डनं मण्डनानाम् ।
तरुणतुलसिमालाकन्धरं कञ्जनेत्रं
सदयधवलहासं विट्ठलं चिन्तयामि ॥

अम्बरीष उवाच—

कथितानि त्वया ब्रह्मन् क्षेत्राणि सुमहान्त्यपि ।
धरण्यां मुनिशार्दूल भुक्तिमुक्तिप्रदान्युत ॥

विष्णुभक्तिकराण्येव क्षेत्राण्यत्यद्भुतानि च ।
सालग्रामं गयाक्षेत्रं नैमिशं पुण्यवर्धनम् ॥

* * *

माहात्म्यं पाण्डुरङ्गाख्यक्षेत्रस्य सुमहत्तरम् ।
तस्मिन् देवो जगन्नाथः शङ्खचक्रगदाधरः ॥
भक्ताय विप्रपुत्राय प्रादाद्वरमनुत्तमम् ।
देवर्षिपितृगन्धर्वगरुडोरगसेवितः ॥
कटिन्यस्तकरः श्रीशः शङ्खपाणिर्जनार्दनः ।
भक्तानुकम्पी भगवानास्ते तत्रातिसुन्दरः ॥

* * *

वक्तुमर्हस्यशेषेण तस्य क्षेत्रस्य वैभवम् ।
यथा स भगवान् देवः प्रवसन्निष्टकोपरि ॥
ननर्त देवगन्धर्वैः स्तूयमानस्सतां गतिः ।
इष्टकायां नटन्यस्माद्विट्ठलः कथ्यते भुवि ॥

मार्कण्डेयः—

साधु साधु महाप्राज्ञ राजपुत्र महायशाः ।
धन्योऽसि त्वं महाभाग यद्गोविन्दकथारुचिः ॥
तत्तेऽहं संप्रवक्ष्यामि तस्य क्षेत्रस्य वैभवम् ।
पाण्डुरङ्गमिति ख्यातं पुण्यं त्रैलोक्यविश्रुतम् ॥

* * *

निजभक्तकरक्षिप्तामिष्टकां स्वयमीक्ष्य तु ।
पद्मासनमाक्रम्य ननर्ताद्भुतदर्शनः ॥
यदिष्टकां समारुह्य कटिन्यस्तकरद्वयः ।
ननर्त तस्माद्राजेन्द्र नाम्ना तं विट्ठलं विदुः ॥
तदा देवर्षिगन्धर्वाः किन्नराश्चाप्सरोगणैः ।
तुष्टुवुर्हृष्टरोमाणस्तत्राभूत् रङ्ग अद्भुतः ॥

वेणुनादं भगवतस्सर्वलोकैकमोहनम् ।
श्रुत्वा दूरगता गावो धावमानास्तमन्वयुः ॥
विक्षिपन्त्यस्स्वपुच्छानि प्रेम्णा राजीवलोचने ।
गोखुरैरर्द्यमानायां भूम्यां रेणुरभून्नृप ॥
तेन पाण्डुरभूद्रङ्गस्तत्र देवगणैर्युतः ।
पाण्डुरङ्ग इति ख्यातं क्षेत्रं पापप्रणाशनम् ॥

**End:**

इति ते सर्वमाख्यातं पाण्डुरङ्गस्य वैभवम् ।
विठ्ठलस्य च राजेन्द्र भीमरथ्यास्तथैव च ॥

सूतः—

इत्यम्बरीषाय मुनिर्महात्मा मृकण्डुसूनुः परमार्थमुक्त्वा ।
संपूजितस्तेन महात्मना पुनर्जगाम विप्रस्तपसे यथागतम् ॥
य इदमनुशृणोति श्रावयेद्वा मुरारेः
चरितममलकीर्तेः पाण्डुरङ्गेश्वरस्य ।
अनुदिनमखिलार्थान् प्राप्य निर्मुक्तबन्धः
स भवति हि मुरारेः प्रीतिपीयूषपात्रम् ॥

**Colophon:**

इति श्रीब्रह्माण्डपुराणे श्रीमत्पाण्डुरङ्गमाहात्म्ये सप्तमोऽध्यायः ॥

---

R. No. **1430.**

Palm-leaf. 15 × 1¼ inches. Foll. 40. Lines, 8 in a page. Grantha. Good.

Purchased in 1914–15 from M.R.Ry. Āñjanēya Śarma of Varahūr, Tanjore district.

**भगवन्नाममहिमा.**

BHAGAVANNĀMAMAHIMĀ.

Similar to the work described under R. No. 25 *ante*. Taken from various Purāṇas and Tantras.

Complete.

